योगो भोगानामंतश्च तद्वियोग एव, अत आद्यंतवन्तोऽनित्या मध्यक्षणभावित्वादित्यर्थः । कौन्तेय न तेषु भोगेषु रमते बुधो विवेक्यवगतपरमार्थतत्त्वः अत्यंतमूढानामेव हि विषयेषु रतिर्दृश्यते यथा पशुप्रभृतीनाम् ॥२२॥

अयं च श्रेयोमार्गप्रतिपक्षी कष्टतमो दोषः सर्वानर्थप्राप्तिहेतुर्दुर्निवारश्चेति तत्परिहारे यत्नाधिक्यं कर्तव्यमित्याह भगवान्—

शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ॥
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥२३॥

शक्नोतीति । शक्नोत्युत्सहत इहैव जीवन्नेव यः सोढुं प्रसहितुं प्राक्पूर्वं शरीरविमोक्षणात् आ मरणात् इत्यर्थः । मरणसीमाकरणं, जीवतोऽवश्यंभावी हि कामक्रोधोद्भवो वेगोऽनंतनिमित्तवान् हि स, इति । यावन्मरणं तावन्न विस्रंभणीय इत्यर्थः । काम इंद्रियगोचरप्राप्त इष्टे विषये श्रूयमाणे स्मर्यमाणे वा अनुभूते सुखहेतौ या गर्धिस्तृष्णा स कामः, क्रोधश्चात्मनः प्रतिकूलेषु दुःखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा यो द्वेषः स क्रोधः तौ कामक्रोधावुद्भवो यस्य वेगस्य स कामक्रोधोद्भवो वेगः, रोमांचनप्रहृष्टनेत्रवदनादिलिंगोऽन्तःकरणप्रक्षोभरूपः कामोद्भवो वेगः, गात्रप्रकंपप्रस्वेदसंदष्टौष्ठपुटरक्तनेत्रादिलिंगः क्रोधोद्भवो वेगः, तं कामक्रोधोद्भवं वेगं य उत्सहते प्रसहते सोढुं प्रसहितुं स युक्तो योगी सुखी चेह लोके नरः ॥२३॥

कथंभूतश्च ब्रह्मणि स्थितो ब्रह्म प्राप्नोतीत्याह भगवान्—

योऽन्तःसुखोऽन्तरारामस्तथांतर्ज्योतिरेव यः ॥
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥२४॥

य इति । योऽन्तःसुखोऽन्तरात्मनि सुखं यस्य सोऽन्तःसुखस्तथा अंतरेवात्मन्याराम आरमणं क्रीडा यस्य सोऽन्तरारामस्तथैवांतरेव आत्मन्येव ज्योतिः प्रकाशो यस्य सोऽन्तर्ज्योतिरेव । य ईदृशः स योगी ब्रह्मनिर्वाणं ब्रह्मणि निर्वृतिं मोक्षमिह जीवन्नेव ब्रह्मभूतः सन्नधिगच्छति प्राप्नोति ॥२४॥

किंच—

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ॥
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥२५॥

लभन्ते इति । लभन्ते ब्रह्मनिर्वाणं मोक्षमृषयः सम्यग्दर्शिनः संन्यासिनः क्षीणकल्मषाः क्षीणपापा निर्दोषाश्छिन्नद्वैधाश्छिन्नसंशया यतात्मानः संयतेंद्रियाः सर्वभूतहिते रताः सर्वेषां भूतानां हित आनुकूल्ये रता अहिंसक इत्यर्थः ॥२५॥

किंच—

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ॥
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥२६॥

कामेति । कामक्रोधवियुक्तानां कामश्च क्रोधश्च कामक्रोधौ ताभ्या वियुक्तानां यतीनां संन्यासिनां यतचेतसां संयतांतःकरणानामभित उभयतो जीवतां मृतानां च ब्रह्मनिर्वाणं मोक्षो वर्तते, विदितात्मनां विदितो ज्ञात आत्मा येषां ते विदितात्मानस्तेषां विदितात्मनां सम्यग्दर्शिनामित्यर्थः ॥२६॥

**सम्यग्दर्शननिष्ठानां संन्यासिनां सद्योमुक्तिरुक्ता । कर्मयोगश्च ईश्वरार्पितसर्वभावेन ईश्वरे ब्रह्मण्याधाय क्रियमाणः सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासक्रमेण मोक्षाय** इति भगवान्पदे पदेऽब्रवीद्वक्ष्यति च अथेदानीं ध्यानयोगं सम्यग्दर्शनस्यांतरंगं विस्तरेण वक्ष्यामीति तस्य सूत्रस्थानीयाञ्श्लोकानुपदिशति स्म—

स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवांतरे भ्रुवोः ॥
प्राणापानौ समौ कृत्वा नासाभ्यंतरचारिणौ ॥२७॥
यतेंद्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ॥
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥२८॥

स्पर्शानिति । स्पर्शाञ्शब्दादीन्कृत्वा बहिर्बाह्यान्, श्रोत्रादिद्वारेणांतर्बुद्धौ प्रवेशिताः शब्दादयो विषयास्तानचिंतयतः शब्दादयो बाह्या बहिरेव कृता भवन्ति, तानेवं बहिः कृत्वा चक्षुश्चैवांतरे भ्रुवोः, कृत्वेत्यनुषज्यते । तथा

प्राणापानौ नासाभ्यंतरचारिणौ समौ कृत्वा । यतेंद्रियमनोबुद्धिर्यतानि संयतानींद्रियाणि मनो बुद्धिश्च यस्य स यतेंद्रियमनोबुद्धिः, मननान्मुनिः संन्यासी, मोक्षपरायण एवं देहसंस्थानो मोक्षपरायणो मोक्ष एव परमयनं परा गतिर्यस्य सोऽयं मोक्षपरायणो मुनिर्भवेत् । विगतेच्छाभयक्रोध इच्छा च भयं च क्रोधश्चेच्छाभयक्रोधास्ते विगता यस्मात्स विगतेच्छाभयक्रोधः । य एवं वर्तते सदा संन्यासी मुक्त एव स न तस्य मोक्षोऽन्यः कर्तव्योऽस्ति ॥२७॥२८॥

एवं समाहितचित्तेन किं विज्ञेयमित्युच्यते—

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ॥
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥२९॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे संन्यासयोगो नाम पंचमोऽध्यायः ॥५॥

भोक्तारमिति । भोक्तारं यज्ञतपसां यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च सर्वलोकमहेश्वरं सर्वेषां लोकानां महान्तमीश्वरं सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतयोपकारिणं सर्वभूतानां हृदयेशयं सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं मां नारायणं ज्ञात्वा शान्तिं सर्वसंसारोपरतिमृच्छति प्राप्नोति ॥२९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये संन्यासयोगो नाम पंचमोऽध्यायः ॥५॥

---

## अथ षष्ठोऽध्यायः ।

अतीतानंतराध्यायान्ते ध्यानयोगस्य सम्यग्दर्शनं प्रति अंतरंगस्य सूत्रभूताः श्लोकाः ‘स्पर्शान्कृत्वा बहिः’ [गी.५.२७] इत्यादय उपदिष्टाः ।

तेषां वृत्तिस्थानीयोऽयं षष्ठोऽध्याय आरभ्यते । तत्र ध्यानयोगस्य बहिरंगं कर्मेति, यावद्ध्यानयोगारोहणासमर्थस्तावत् गृहस्थेनाधिकृतेन कर्तव्यं कर्म इत्यतस्तत्स्तौति—

ननु किमर्थं ध्यानयोगारोहणसीमाकरणं यावतानुष्ठेयमेव विहितं कर्म यावज्जीवम् । न, 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते' [गी.६.३] इति विशेषणादारूढस्य च शमेनैव संबंधकरणात् । आरुरुक्षोरारूढस्य च शमः कर्म चोभयं कर्तव्यत्वेनाभिप्रेतं चेत्स्यात्तदा आरुरुक्षोरारूढस्य चेति शमकर्मविषय-भेदेन विशेषणं विभागकरणं चानर्थकं स्यात् ॥

तत्राश्रमिणां कश्चिद्योगमारुरुक्षुर्भवति, आरूढश्च कश्चित्, अन्ये नारु-रुक्षवो न चारूढाः तानपेक्ष्य 'आरुरुक्षोः' 'आरूढस्य च' इति विशेषणं वि-भागकरणं चोपपद्यत एवेति चेत् । न, 'तस्यैव' इति वचनात् । पुनर्योगग्र-हणाच्च 'योगारूढस्य' इति। य आसीत्पूर्वं योगमारुरुक्षुस्तस्यैवारूढस्य शम एव कर्तव्यः कारणं योगफलं प्रत्युच्यत इति । अतो न यावज्जीवं कर्तव्यत्वप्राप्तिः कस्यचिदपि कर्मणः । योगविभ्रष्टवचनाच्च गृहस्थस्य चेत्कर्मिणो योगो विहितः षष्ठेऽध्याये, स योगविभ्रष्टोऽपि कर्मगतिं कर्मफलं प्राप्नोतीति तस्य नाशाशंका अनुपपन्ना स्यात् । अवश्यं हि कृतं कर्म काम्यं नित्यं वा —मोक्षस्य नित्यत्वाद-नारभ्यत्वे— स्वं फलमारभत एव । नित्यस्य च कर्मणो वेदप्रमाणावबुद्धत्वात्फ-लेन भवितव्यमित्यवोचाम अन्यथा वेदस्यानर्थक्यप्रसंगादिति । न च कर्मणि सत्युभयविभ्रष्टवचनमर्थवत्कर्मणो विभ्रंशकारणानुपपत्तेः ॥

कर्म कृतमीश्वरे संन्यस्येत्यतः कर्तरि कर्म फलं नारभत इति चेत् । न, ईश्वरे संन्यासस्याधिकतरफलहेतुत्वोपपत्तेः । मोक्षायैवेति चेत्स्वकर्मणां कृता-नामीश्वरे न्यासो मोक्षायैव न फलान्तराय योगसहितः, योगाच्च विभ्रष्टः, इत्य-तस्तं प्रति नाशाशंका युक्तैवेति चेत् । न, 'एकाकी यतचित्तात्मा निराशीर-परिग्रहः' [गी.६.१०], 'ब्रह्मचारिव्रते स्थितः [गी.६.१४] इति कर्मसंन्या-सविधानात् । न चात्र ध्यानकाले स्त्रीसहायत्वाशंका येनैकाकित्वं विधीयते ।

न च गृहस्थस्य 'निराशीरपरिग्रहः' इत्यादिवचनमनुकूलम् । उभयविभ्रष्टप्रश्नानुपपत्तेश्च ॥

अनाश्रित इत्यनेन कर्मिण एव संन्यासित्वं योगित्वं चोक्तं, प्रतिषिद्धं च निरग्नेरक्रियस्य च संन्यासित्वं योगित्वं चेति चेत् । न, ध्यानयोगं प्रति बहिरंगस्य सतः कर्मणः फलाकांक्षासंन्यासस्तुतिपरत्वात् । न केवलं निरग्निरक्रिय एव संन्यासी योगी च । किं तर्हि कर्म्यपि, कर्मफलासंगं संन्यस्य कर्मयोगमनुतिष्ठन्सत्त्वशुद्ध्यर्थं 'स संन्यासी च योगी च' भवतीति स्तूयते । न चैकेन वाक्येन कर्मफलासंगसंन्यासस्तुतिश्चतुर्थाश्रमप्रतिषेधश्चोपपद्यते । न च प्रसिद्धं निरग्नेरक्रियस्य परमार्थसंन्यासिनः श्रुतिस्मृतिपुराणेतिहासयोगशास्त्रेषु विहितं संन्यासित्वं योगित्वं च प्रतिषेधति भगवान् । स्ववचनविरोधाच्च । 'सर्वकर्माणि मनसा संन्यस्य...नैव कुर्वन्न कारयन् आस्ते' [गी.५.१३], 'मौनी संतुष्टो येन केनचित् अनिकेतः स्थिरमतिः' [गी.१२.१९], 'विहाय कामान्यः सर्वान्पुमांश्चरति निस्पृहः' [गी.२.७१], 'सर्वारंभपरित्यागी' [गी.१२.१६] इति च तत्र तत्र भगवता स्ववचनानि दर्शितानि, तैर्विरुध्येत चतुर्थाश्रमप्रतिषेधः । तस्मान्मुनेर्योगमारुरुक्षोः प्रतिपन्नगार्हस्थ्यस्याग्निहोत्रादिकर्म फलनिरपेक्षमनुष्ठीयमानं ध्यानयोगारोहणसाधनत्वं सत्त्वशुद्धिद्वारेण प्रतिपद्यत इति 'स संन्यासी च योगी च' इति स्तूयते—

**श्रीभगवानुवाच ।**

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥१॥**

अनाश्रितेति । अनाश्रितो नाश्रितोऽनाश्रितः । किं, कर्मफलं कर्मणः फलं कर्मफलं यत्तदनाश्रितः कर्मफलतृष्णारहित इत्यर्थः । यो हि कर्मफलतृष्णावान्स कर्मफलमाश्रितो भवत्ययं तु तद्विपरीतोऽतोऽनाश्रितः कर्मफलम् । एवंभूतः सन्कार्यं कर्तव्यं नित्यं काम्यविपरीतमग्निहोत्रादिकं कर्म करोति निर्वर्तयति यः कश्चिदीदृशः कर्मी स कर्म्यंतरेभ्यो विशिष्यत इत्येवमर्थमाह स संन्यासी च

योगी चेति । संन्यासः परित्यागः स यस्यास्ति स संन्यासी च, योगी च योगश्चित्तसमाधानं स यस्यास्ति स योगी च, इत्येवंगुणसंपन्नोऽयं मन्तव्यो न केवलं निरग्निरक्रिय एव संन्यासी योगी चेति मन्तव्यः । निर्गता अग्नयः कर्मांगभूता यस्मात्स निरग्निः अक्रियश्चानग्निसाधना अपि अविद्यमानाः क्रियास्तपोदानादिका यस्यासौ अक्रियः ॥१॥

ननु च निरग्नेरक्रियस्यैव श्रुतिस्मृतियोगशास्त्रेषु संन्यासित्वं योगित्वं च प्रसिद्धम् । कथमिह साग्नेः सक्रियस्य च संन्यासित्वं योगित्वं चाप्रसिद्धमुच्यत इति । नैष दोषः । कयाचित् गुणवृत्त्योभयस्य संपिपादयिषितत्वात् । तत्कथं, कर्मफलसंकल्पसंन्यासात्संन्यासित्वं योगांगत्वेन च कर्मानुष्ठानात्कर्मफलसंकल्पस्य च चित्तविक्षेपहेतोः परित्यागाद्योगित्वं चेति गौणमुभयं, न पुनर्मुख्यं संन्यासित्वं योगित्वं चाभिप्रेतमित्येतमर्थं दर्शयितुमाह—

यं संन्यासमिति प्राहुर्योगं तं विद्धि पांडव ॥
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥२॥

यमिति । यं सर्वकर्मतत्फलपरित्यागलक्षणं परमार्थसंन्यासं संन्यासमिति प्राहुः श्रुतिस्मृतिविदो, योगं कर्मानुष्ठानलक्षणं तं परमार्थसंन्यासं विद्धि जानीहि हे पांडव । कर्मयोगस्य प्रवृत्तिलक्षणस्य तद्विपरीतेन निवृत्तिलक्षणेन परमार्थसंन्यासेन कीदृशं सामान्यमंगीकृत्य तद्भाव उच्यत इत्यपेक्षायामिदमुच्यते— अस्ति हि परमार्थसंन्यासेन सादृश्यं कर्तृद्वारकं कर्मयोगस्य । यो हि परमार्थसंन्यासी स त्यक्तसर्वकर्मसाधनतया सर्वकर्मतत्फलविषयं संकल्पं प्रवृत्तिहेतुकामकारणं संन्यस्यति । अयमपि कर्मयोगी कर्म कुर्वाण एव फलविषयं संकल्पं संन्यस्यतीत्येतमर्थं दर्शयिष्यन्नाह— न हि यस्मादसंन्यस्तसंकल्पोऽसंन्यस्तोऽपरित्यक्तः फलविषयः संकल्पोऽभिसंधिर्येन सोऽसंन्यस्तसंकल्पः कश्चन कश्चिदपि कर्मी योगी समाधानवान्भवति न संभवतीत्यर्थः, फलसंकल्पस्य चित्तविक्षेपहेतुत्वात् । तस्माद्यः कश्चन कर्मी संन्यस्तफलसंकल्पो भवेत्स योगी समाधानवानविक्षिप्तचित्तो भवेच्चित्तविक्षेपहेतोः फलसंकल्पस्य संन्यस्तत्वादित्यभिप्रायः ॥

एवं परमार्थसंन्यासकर्मयोगयोः कर्तृद्वारकं संन्याससामान्यमपेक्ष्य 'यं संन्यासमिति प्राहुर्योगं तं विद्धि पांडव' इति कर्मयोगस्य स्तुत्यर्थं संन्यासत्वमुक्तम् । ध्यानयोगस्य फलनिरपेक्षः कर्मयोगो बहिरंगं साधनमिति तं संन्यासत्वेन स्तुत्वा अधुना कर्मयोगस्य ध्यानयोगसाधनत्वं दर्शयति—

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ॥**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥३॥**

आरुरुक्षोरिति । आरुरुक्षोरारोढुमिच्छतोऽनारूढस्य ध्यानयोगेऽवस्थातुमशक्तस्यैवेत्यर्थः । कस्य तस्य आरुरुक्षोः ? मुनेः कर्मफलसंन्यासिन इत्यर्थः । किमारुरुक्षोः ? योगम् । कर्म कारणं साधनमुच्यते । योगारूढस्य पुनस्तस्यैव शम उपशमः सर्वकर्मभ्यो निवृत्तिः कारणं योगारूढस्य साधनमुच्यत इत्यर्थः । यावद्यावत्कर्मभ्य उपरमते तावत्तावन्निरायासस्य जितेंद्रियस्य चित्तं समाधीयते । तथा सति स झटिति योगारूढो भवति । तथा चोक्तं व्यासेन— "नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । शीलं स्थितिर्दंडनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः" [मभा.शां.१७५.३७] इति ॥३॥

अथेदानीं कदा योगारूढो भवतीत्युच्यते—

**यदा हि नेंद्रियार्थेषु न कर्मस्वनुषज्यते ॥**
**सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥४॥**

यदेति । यदा समाधीयमानचित्तो योगी हि इंद्रियार्थेष्विंद्रियाणामर्थाः शब्दादयस्तेष्विंद्रियार्थेषु कर्मसु च नित्यनैमित्तिककाम्यप्रतिषिद्धेषु प्रयोजनाभावबुद्ध्या नानुषज्यतेऽनुषंगं कर्तव्यताबुद्धिं न करोतीत्यर्थः । सर्वसंकल्पसंन्यासी सर्वान्संकल्पान् इहामुत्रार्थकामहेतून् संन्यसितुं शीलमस्येति सर्वसंकल्पसंन्यासी, योगारूढः प्राप्तयोग इत्येतत्, तदा तस्मिन्काल उच्यते । सर्वसंकल्पसंन्यासीति वचनात्सर्वांश्च कामान्सर्वाणि च कर्माणि संन्यस्येदित्यर्थः । संकल्पमूला हि सर्वे कामाः— "संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः" [मनु.२.३], "काम जानामि ते मूलं संकल्पात्किल जायसे। न त्वां संकल्पयिष्यामि तेन मे न भवि-

ष्यासि'' [मभा.शां.१७७.२५] इत्यादिस्मृतेः। सर्वकामपरित्यागे च सर्वकर्मसंन्यासः सिद्धो भवति ''स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते'' [बृ.४.४.५] इत्यादिश्रुतिभ्यो, ''यद्यद्धि कुरुते कर्म तत्तत्कामस्य चेष्टितम्'' [मनु.२.४] इत्यादिस्मृतिभ्यश्च। न्यायाच्च— न हि सर्वसंकल्पसंन्यासे कश्चित्स्पंदितुमपि शक्तः। तस्मात्सर्वसंकल्पसंन्यासीति वचनात्सर्वान्कामान्सर्वाणि कर्माणि च त्याजयति भगवान् ॥४॥

यदैवं योगारूढस्तदा तेनात्मा उद्धृतो भवति संसारादनर्थजातात्। अतः—

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ॥
आत्मैव ह्यात्मनो बंधुरात्मैव रिपुरात्मनः ॥५॥

उद्धरेदिति। उद्धरेत्संसारसागरे निमग्नमात्मनात्मानं तत उदूर्ध्वं हरेदुद्धरेत् योगारूढतामापादयेदित्यर्थः। नात्मानमवसादयेन्नाधो नयेन्नाधो गमयेत्। आत्मैव हि यस्मादात्मनो बंधुः। न ह्यन्यः कश्चिद्बंधुर्यः संसारमुक्तये भवति। बंधुरपि तावन्मोक्षं प्रति प्रतिकूल एव स्नेहादिबंधनायतनत्वात्। तस्माद्युक्तमवधारणमात्मैव ह्यात्मनो बंधुरिति। आत्मैव रिपुः शत्रुः। योऽन्योऽपकारी बाह्यः शत्रुः सोऽप्यात्मप्रयुक्त एवेति युक्तमेवावधारणमात्मैव रिपुरात्मन इति ॥५॥

आत्मैव बंधुरात्मैव रिपुरात्मन इत्युक्तम्। तत्र किंलक्षण आत्मा आत्मनो बंधुः किंलक्षणो वा आत्मा आत्मनो रिपुरित्युच्यते—

बंधुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ॥
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥६॥

बंधुरिति। बंधुरात्मात्मनस्तस्य, तस्यात्मनः स आत्मा बंधुर्येनात्मनात्मैव जितः, आत्मा कार्यकरणसंघातो येन वशीकृतो, जितेंद्रिय इत्यर्थः। अनात्मनस्त्वजितात्मनस्तु शत्रुत्वे शत्रुभावे वर्तेतात्मैव शत्रुवत्, यथाऽनात्मा शत्रुरात्मनोऽपकारी तथात्मात्मनोऽपकारे वर्तेतेत्यर्थः ॥६॥

जितात्मनः प्रशान्तस्य परमात्मा समाहितः ॥
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥७॥

जितात्मन इति । जितात्मनः कार्यकरणसंघात आत्मा जितो येन स जितात्मा तस्य जितात्मनः, प्रशान्तस्य प्रसन्नांतःकरणस्य सतः संन्यासिनः परमात्मा समाहितः साक्षादात्मभावेन वर्तत इत्यर्थः । किंच शीतोष्णसुखदुःखेषु तथा मानेऽपमाने च मानापमानयोः पूजापरिभवयोः समः स्यात् ॥७॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेंद्रियः ॥
युक्त इत्युच्यते योगी समलोष्टाश्मकांचनः ॥८॥

ज्ञानेति । ज्ञानविज्ञानतृप्तात्मा ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानं, विज्ञानं तु शास्त्रतो ज्ञातानां तथैव स्वानुभवकरणं, ताभ्यां ज्ञानविज्ञानाभ्यां तृप्तः संजातालंप्रत्यय आत्मा अंतःकरणं यस्य स ज्ञानविज्ञानतृप्तात्मा, कूटस्थोऽप्रकंप्यो, भवतीत्यर्थः । विजितेंद्रियश्च । य ईदृशो, युक्तः समाहित इति स उच्यते कथ्यते योगी । स समलोष्टाश्मकांचनो लोष्टाश्मकांचनानि समानि यस्य स समलोष्टाश्मकांचनः ॥८॥

किंच—

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबंधुषु ॥
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥९॥

सुहृदिति । सुहृदित्यादिश्लोकार्धमेकं पदम् । सुहृदिति प्रत्युपकारमनपेक्ष्योपकर्ता, मित्रं स्नेहवान्, अरिः शत्रुः, उदासीनो न कस्यचित्पक्षं भजते, मध्यस्थो यो विरुद्धयोरुभयोर्हितैषी, द्वेष्य आत्मनोऽप्रियः, बंधुः संबंधी । इत्येतेषु साधुषु शास्त्रानुवर्तिष्वपि च पापेषु प्रतिषिद्धकारिषु सर्वेष्वेतेषु समबुद्धिः 'कः किंकर्मा' इत्यव्यापृतबुद्धिरित्यर्थः । विशिष्यते विमुच्यत इति वा पाठान्तरम् । योगारूढानां सर्वेषामयमुत्तम इत्यर्थः ॥९॥

अत एवमुत्तमफलप्राप्तये—

योगी युंजीत सततमात्मानं रहसि स्थितः ॥

एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥१०॥

योगीति । योगी ध्यायी युंजीत समादध्यात्सततं सर्वदात्मानमंतःकरणं रहस्येकान्ते गिरिगुहादौ स्थितः सन्नेकाक्यसहायः । रहसि स्थितः एकाकी चेति विशेषणात्संन्यासं कृत्वेत्यर्थः । यतचित्तात्मा चित्तमंतःकरणमात्मा देहश्च संयतौ यस्य स यतचित्तात्मा निराशीर्वीततृष्णोऽपरिग्रहश्च परिग्रहरहितश्च इत्यर्थः । संन्यासित्वेऽपि त्यक्तसर्वपरिग्रहः सन् युंजीतेत्यर्थः ॥१०॥

अथेदानीं योगं युंजत आसनाहारविहारादीनां योगसाधनत्वेन नियमो वक्तव्यः, प्राप्तयोगस्य लक्षणं तत्फलादि च, इत्यत आरभ्यते । तत्रासनमेव तावत्प्रथममुच्यते—

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ॥
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥११॥

शुचौ इति । शुचौ शुद्धे विविक्ते स्वभावतः संस्कारतो वा देशे स्थाने प्रतिष्ठाप्य स्थिरमचलमात्मन आसनं नात्युच्छ्रितं नातीवोच्छ्रितं नाप्यतिनीचं, तच्च चैलाजिनकुशोत्तरं चैलमाजिनं कुशाश्चोत्तरे यस्मिन्नासने तदासनं चैलाजिनकुशोत्तरम् । पाठक्रमाद्विपरीतोऽत्र क्रमश्चैलादीनाम् ॥११॥

प्रतिष्ठाप्य किम्—

तत्रैकाग्रं मनः कृत्वा यतचित्तेंद्रियक्रियः ॥
उपविश्यासने युंज्याद्योगमात्मविशुद्धये ॥१२॥

तत्रेति । तत्र तस्मिन्नासन उपविश्य योगं युंज्यात् । कथं, सर्वविषयेभ्य उपसंहृत्यैकाग्रं मनः कृत्वा यतचित्तेंद्रियक्रियः, चित्तं चेंद्रियाणि च चित्तेंद्रियाणि तेषां क्रियाः संयता यस्य स यतचित्तेंद्रियक्रियः । स किमर्थं योगं युंज्यादित्याह आत्मविशुद्धये अंतःकरणस्य विशुद्धयर्थमित्येतत् ॥१२॥

बाह्यमासनमुक्तम्, अधुना शरीरधारणं कथमित्युच्यते—

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ॥
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥१३॥

सममिति । समं कायशिरोग्रीवं कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं तत्समं धारयन्नचलं च । समं धारयतश्चलनं संभवत्यतो विशिनष्टि अचलमिति । स्थिरः स्थिरो भूत्वेत्यर्थः । स्वं नासिकाग्रं संप्रेक्ष्य सम्यक्प्रेक्षणं दर्शनं कृत्वेवेति । इवशब्दो लुप्तो द्रष्टव्यः । न हि स्वनासिकाग्रसंप्रेक्षणमिह विधित्सितम् । किं तर्हि चक्षुषोर्दृष्टिसंनिपातः । स चांतःकरणसमाधानापेक्षो विवक्षितः । स्वनासिकाग्रसंप्रेक्षणमेव चेद्विवक्षितं मनस्तत्रैव समाधीयेत, नात्मनि । आत्मनि हि मनसः समाधानं वक्ष्यति 'आत्मसंस्थं मनः कृत्वा' [गी.६.२५] इति। तस्मादिवशब्दलोपेनाक्ष्णोर्दृष्टिसंनिपात एव संप्रेक्ष्येत्युच्यते। दिशश्चानवलोकयन्दिशां चावलोकनमंतराकुर्वन्नित्येतत् ॥१३॥

किंच—

**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ॥**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥१४॥**

प्रशान्तेति। प्रशान्तात्मा प्रकर्षेण शान्त आत्मा अंतःकरणं यस्य सोऽयं प्रशान्तात्मा, विगतभीर्विगतभयो, ब्रह्मचारिव्रते स्थितो ब्रह्मचारिणो व्रतं ब्रह्मचर्यं गुरुशुश्रूषाभिक्षाभुक्त्यादि तस्मिन्स्थितस्तदनुष्ठाता भवेदित्यर्थः । किंच मनः संयम्य मनसो वृत्तीरुपसंहृत्येत्येतन्मच्चित्तो मयि परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तो युक्तः समाहितः सन्नासीतोपविशेत् । मत्परोऽहं परो यस्य सोऽयं मत्परः । भवति कश्चिद्रागी स्त्रीचित्तो न तु स्त्रियमेव परत्वेन गृह्णाति, किं तर्हि राजानं महादेवं वा । अयं तु मच्चित्तो मत्परश्च ॥१४॥

अथेदानीं योगफलमुच्यते—

**युंजन्नेवं सदात्मानं योगी नियतमानसः ॥**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥१५॥**

युंजन्निति । युंजन्समाधानं कुर्वन्नेवं यथोक्तेन विधानेन सदात्मानं योगी नियतमानसो नियतं संयतं मानसं मनो यस्य सोऽयं नियतमानसः, शान्तिमुपरतिं निर्वाणपरमां निर्वाणं मोक्षस्तत्परमा निष्ठा यस्याः शान्तेः सा निर्वा-

णपरमा तां निर्वाणपरमां मत्संस्थां मदधीनामधिगच्छति प्राप्नोति ॥१५॥

इदानीं योगिन आहारादिनियम उच्यते—

**नात्यश्नतस्तु योगोऽस्ति न चैकांतमनश्नतः ॥**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥१६॥**

नेति । नात्यश्नत आत्मसंमितमन्नपरिमाणमतीत्य अश्नतोऽत्यश्नतो न योगोऽस्ति । न चैकान्तमनश्नतो योगोऽस्ति । "यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति, यद्भूयो हिनस्ति तद्यत्कनीयोऽन्नं न तदवति" [शतपथे ?] इति श्रुतेः । तस्माद्योगी नात्मसंमितादन्नादधिकं न्यूनं वाऽश्नीयात् । अथवा योगिनो योगशास्त्रे परिपठितादन्नपरिमाणादतिमात्रमश्नतो योगो नास्ति । उक्तं हि– "अर्धं सव्यंजनान्नस्य तृतीयमुदकस्य च । वायोः संचरणार्थं तु चतुर्थ-मवशेषयेत्" [योगशास्त्रे ?] इत्यादि परिमाणम् । तथा न चातिस्वप्नशीलस्य योगो भवति नैव चातिमात्रं जाग्रतो योगो भवति चार्जुन ॥१६॥

कथं पुनर्योगो भवतीत्युच्यते—

**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ॥**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥१७॥**

युक्तेति । युक्ताहारविहारस्य आह्रियत इत्याहारोऽन्नं, विहरणं विहारः पादक्रमः, तौ युक्तौ नियतपरिमाणौ यस्य स युक्ताहारविहारः तस्य, तथा युक्त-चेष्टस्य युक्ता नियता चेष्टा यस्य कर्मसु तस्य, तथा युक्तस्वप्नावबोधस्य युक्तौ स्वप्नश्चावबोधश्च तौ नियतकालौ यस्य तस्य । युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु युक्तस्वप्नावबोधस्य योगिनो योगो भवति दुःखहा दुःखानि सर्वाणि हन्तीति दुःखहा सर्वसंसारदुःखक्षयकृद्योगो भवतीत्यर्थः ॥१७॥

अथाधुना कदा युक्तो भवतीत्युच्यते—

**यदा विनियतं चित्तमात्मन्येवावतिष्ठते ॥**
**निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥१८॥**

यदेति । यदा विनियतं विशेषेण नियतं संयतमेकाग्रतामापन्नं चित्तं

हित्वा बाह्यचिंतामात्मन्येव केवलेऽवतिष्ठते स्वात्मनि स्थितिं लभत इत्यर्थः । निःस्पृहः सर्वकामेभ्यो निर्गता दृष्टादृष्टविषयेभ्यः स्पृहा तृष्णा यस्य योगिनः स युक्तः समाहित इत्युच्यते तदा तस्मिन्काले ॥१८॥

तस्य योगिनः समाहितं यच्चित्तं तस्योपमोच्यते—

**यथा दीपो निवातस्थो नेंगते सोपमा स्मृता ॥**
**योगिनो यतचित्तस्य युंजतो योगमात्मनः ॥१९॥**

यथेति । यथा दीपः प्रदीपो निवातस्थो निवाते वातवर्जिते देशे स्थितो नेंगते न चलति सोपमा उपमीयतेऽनयेत्युपमा योगज्ञैश्चित्तप्रचारदर्शिभिः स्मृता चिन्तिता । योगिनो यतचित्तस्य संयतांतःकरणस्य युंजतो योगमनुतिष्ठत आत्मनः समाधिमनुतिष्ठत इत्यर्थः ॥१९॥

एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीपकल्पं सत्—

**यत्रोपरमते चित्तं निरुद्धं योगसेवया ॥**
**यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥२०॥**

यत्रेति । यत्र यस्मिन्काल उपरमते चित्तमुपरतिं गच्छति निरुद्धं सर्वतोनिवारितप्रचारं योगसेवया योगानुष्ठानेन, यत्र चैव यस्मिंश्च काल आत्मना समाधिपरिशुद्धेनांतःकरणेनात्मानं परं चैतन्यं ज्योतिःस्वरूपं पश्यन्नुपलभमानः स्व एवात्मनि तुष्यति तुष्टिं भजते ॥२०॥

किंच—

**सुखमात्यंतिकं यत्तद्बुद्धिग्राह्यमतींद्रियम् ॥**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥२१॥**

सुखेति । सुखमात्यंतिकमत्यंतमेव भवतीत्यात्यंतिकमनंतमित्यर्थः । यत्तद्बुद्धिग्राह्यं बुद्ध्यैवेंद्रियनिरपेक्षया गृह्यत इति बुद्धिग्राह्यम्, अतींद्रियमिंद्रियगोचरातीतमविषयजनितमित्यर्थः । वेत्ति तदीदृशं सुखमनुभवति यत्र यस्मिन्काले, न चैव अयं विद्वानात्मस्वरूपे स्थितस्तस्मान्नैव चलति तत्त्वतस्तत्त्वस्वरूपान्न प्रच्यवत इत्यर्थः ॥२१॥

किंच—

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ॥
यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते ॥२२॥

यमिति । यं लब्ध्वा यमात्मलाभं लब्ध्वा प्राप्य चापरमन्यल्लाभं लाभान्तरं ततोऽधिकमस्तीति न मन्यते न चिन्तयति । किंच यस्मिन्नात्मतत्त्वे स्थितो दुःखेन शस्त्रनिपातादिलक्षणेन गुरुणा महतापि न विचाल्यते ॥२२॥

'यत्रोपरमते' [गी.६.२०] इत्याद्यारभ्य यावद्भिर्विशेषणैर्विशिष्ट आत्मावस्थाविशेषो योग उक्तः—

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ॥
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥२३॥

तमिति । तं विद्याद्विजानीयात् दुःखसंयोगवियोगं दुःखैः संयोगो दुःखसंयोगस्तेन वियोगो दुःखसंयोगवियोगस्तं दुःखसंयोगवियोगं योग इत्येव संज्ञितं विपरीतलक्षणेन विद्याद्विजानीयादित्यर्थः । योगफलमुपसंहृत्य पुनरन्वारंभेण योगस्य कर्तव्यतोच्यते निश्चयानिर्वेदयोर्योगसाधनत्वविधानार्थम् । स यथोक्तफलो योगो निश्चयेनाध्यवसायेन योक्तव्योऽनिर्विण्णचेतसा न निर्विण्णमनिर्विण्णं किं तत्? चेतस्तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थः ॥२३॥

किंच—

संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ॥
मनसैवेंद्रियग्रामं विनियम्य समंततः ॥२४॥

संकल्पेति । संकल्पप्रभवान्संकल्पः प्रभवो येषां कामानां ते संकल्पप्रभवाः कामास्तांस्त्यक्त्वा परित्यज्य सर्वानशेषतो निर्लेपेन । किंच मनसैव विवेकयुक्तेनेंद्रियग्राममिंद्रियसमुदायं विनियम्य नियमनं कृत्वा समंततः समंतात् ॥२४॥

शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ॥
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिंतयेत् ॥२५॥

शनैरिति । शनैः शनैर्न सहसोपरमेदुपरतिं कुर्यात् । कया ? बुद्ध्या । किंविशिष्टया ? धृतिगृहीतया धृत्या धैर्येण गृहीतया धृतिगृहीतया धैर्येण युक्तयेत्यर्थः । आत्मसंस्थमात्मनि संस्थितं 'आत्मैव सर्वं न ततोऽन्यत्किंचिदस्ति' इत्येवमात्मसंस्थं मनः कृत्वा न किंचिदपि चिंतयेत् । एष योगस्य परमो विधिः ॥२५॥

तत्रैवमात्मसंस्थं मनः कर्तुं प्रवृत्तो योगी—

**यतो यतो निश्चरति मनश्चंचलमस्थिरम् ॥**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥२६॥**

यत इति । यतो यतो यस्माद्यस्मान्निमित्ताच्छब्दादेर्निश्चराति निर्गच्छति स्वभावदोषान्मनश्चंचलमत्यर्थं चलमत एवास्थिरं, ततस्ततस्तस्मात्तस्माच्छब्दादेर्निमित्तान्नियम्य तत्तन्निमित्तं याथात्म्यनिरूपणेनाभासीकृत्य वैराग्यभावनया चैतन्मन आत्मन्येव वशं नयेदात्मवश्यतामापादयेत् । एवं योगाभ्यासबलाद्योगिन आत्मन्येव प्रशाम्यति मनः ॥२६॥

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ॥**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥२७॥**

प्रशान्तेति । प्रशान्तमनसं प्रकर्षेण शान्तं मनो यस्य स प्रशान्तमनास्तं प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमं निरतिशयमुपैत्युपगच्छाति । शान्तरजसं प्रक्षीणमोहादिक्लेशरजसमित्यर्थः । ब्रह्मभूतं जीवन्मुक्तं ब्रह्मैव सर्वमित्येवंनिश्चयवन्तं ब्रह्मभूतं अकल्मषमधर्मादिवर्जितम् ॥२७॥

**युंजन्नेवं सदात्मानं योगी विगतकल्मषः ॥**
**सुखेन ब्रह्मसंस्पर्शमत्यंतं सुखमश्नुते ॥२८॥**

युंजन्निति । युंजन्नेवं यथोक्तेन क्रमेण योगी योगान्तरायवर्जितः सदात्मानं विगतकल्मषो विगतपापः, सुखेनानायासेन ब्रह्मसंस्पर्शं ब्रह्मणा परेण संस्पर्शो यस्य तद्ब्रह्मसंस्पर्शं सुखमत्यंतं अंतमतीत्य वर्तत इत्यत्यंतं उत्कृष्टं निरतिशयमश्नुते व्याप्नोति ॥२८॥

इदानीं योगस्य यत्फलं ब्रह्मैकत्वदर्शनं सर्वसंसारविच्छेदकारणं तत्प्रदर्श्यते—

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ॥**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥२९॥**

सर्वेति । सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वमात्मानं सर्वभूतानि चात्मनि ब्रह्मादीनि स्तंबपर्यंतानि च सर्वभूतान्यात्मन्येकतां गतानीक्षते पश्यति योगयुक्तात्मा समाहितांतःकरणः सर्वत्रसमदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं ज्ञानं यस्य स सर्वत्रसमदर्शनः ॥२९॥

एतस्यात्मैकत्वदर्शनस्य फलमुच्यते—

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ॥**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥३०॥**

य इति । यो मां पश्यति वासुदेवं सर्वस्यात्मानं सर्वत्र सर्वेषु भूतेषु सर्वं च ब्रह्मादिभूतजातं मयि सर्वात्मनि पश्यति, तस्यैवमात्मैकत्वदर्शिनोऽहमीश्वरो न प्रणश्यामि न परोक्षतां गमिष्यामि । स च मे न प्रणश्यति स च विद्वान्मम वासुदेवस्य न प्रणश्यति न परोक्षो भवति तस्य च मम चैकात्मकत्वात्, स्वात्मा हि नामात्मनः प्रिय एव भवति, यस्माचाहमेव सर्वात्मैकत्वदर्शी ॥३०॥

इत्येतत्पूर्वश्लोकार्थं सम्यग्दर्शनमनूद्य तत्फलं मोक्षोऽभिधीयते—

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ॥**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥३१॥**

सर्वेति । सर्वथा सर्वप्रकारैर्वर्तमानोऽपि सम्यग्दर्शी योगी मयि वैष्णवे परमे पदे वर्तते, नित्यमुक्त एव स, न मोक्षं प्रति केनचित्प्रतिबध्यत इत्यर्थः ॥३१॥

किंचान्यत्—

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ॥
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥३२॥

आत्मौपम्येनेति । आत्मौपम्येनात्मा स्वयमेवोपमीयते अनया इत्युपमा, तस्या उपमाया भाव औपम्यं तेनात्मौपम्येन, सर्वत्र सर्वभूतेषु समं तुल्यं पश्यति योऽर्जुन, स च किं समं पश्यतीत्युच्यते– यथा मम सुखमिष्टं तथा सर्वप्राणिनां सुखमनुकूलम् । वाशब्दश्चार्थे । यदि वा यच्च दुःखं मम प्रतिकूलमनिष्टं यथा तथा सर्वप्राणिनां दुःखमनिष्टं प्रतिकूलमित्येवमात्मौपम्येन, सुखदुःखे अनुकूलप्रतिकूले तुल्यतया सर्वभूतेषु समं पश्यति, न कस्यचित्प्रतिकूलमाचरति, अहिंसक इत्यर्थः । य एवमहिंसकः सम्यग्दर्शननिष्ठः स योगी परम उत्कृष्टो मतोऽभिप्रेतः सर्वयोगिनां मध्ये ॥३२॥

एतस्य यथोक्तस्य सम्यग्दर्शनलक्षणस्य योगस्य दुःखसंपाद्यतामालक्ष्य शुश्रूषुर्ध्रुवं तत्प्राप्त्युपायं अर्जुन उवाच—

अर्जुन उवाच ।

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ॥
एतस्याहं न पश्यामि चंचलत्वात्स्थितिं स्थिराम् ॥३३॥

योऽयमिति । योऽयं योगस्त्वया प्रोक्तः साम्येन समत्वेन हे मधुसूदन, एतस्य योगस्याहं न पश्यामि नोपलभे चंचलत्वान्मनसः । किं ? स्थिरामचलां स्थितिम् ॥३३॥

प्रसिद्धमेतत्—

चंचलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ॥
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥३४॥

चंचलमिति । चंचलं हि मनः । कृष्णेति कृषतेर्विलेखनार्थस्य रूपं, भक्तजनपापादिदोषाकर्षणात्कृष्णः । हि यस्मान्मनः चंचलं न केवलमत्यर्थं चंचलं, प्रमाथि च प्रमथनशीलं, प्रमथ्नाति शरीरमिंद्रियाणि च विक्षिपत्सत् परवशीकरोति । किंच बलवत् प्रबलं न केनचिन्नियन्तुं शक्यं दुर्निवारत्वात् ।

किंच दृढं तंतुनागवदच्छेद्यम् । तस्यैवंभूतस्य मनसोऽहं निग्रहं निरोधं मन्ये वायोरिव । यथा वायोर्दुष्करो निग्रहस्ततोऽपि मनसो दुष्करं मन्ये इत्यभिप्रायः ॥३४॥

श्रीभगवानुवाच एवमेतद्यथा ब्रवीषि—

**श्रीभगवानुवाच ।**

**असंशयं महाबाहो मनो दुर्निग्रहं चलम् ॥**
**अभ्यासेन तु कौंतेय वैराग्येण च गृह्यते ॥३५॥**

असंशयमिति । असंशयं नास्ति संशयो मनो दुर्निग्रहं चलमित्यत्र हे महाबाहो । किंत्वभ्यासेन तु अभ्यासो नाम चित्तभूमौ कस्यांचित्समानप्रत्ययावृत्तिश्चित्तस्य । वैराग्येण वैराग्यं नाम दृष्टादृष्टेष्टभोगेषु दोषदर्शनाभ्यासाद्वैतृष्ण्यं तेन च वैराग्येण गृह्यते विक्षेपरूपः प्रचारश्चित्तस्य एवं तन्मनो गृह्यते निगृह्यते निरुध्यत इत्यर्थः ॥३५॥

यः पुनरसंयतात्मा तेन—

**असंयतात्मना योगो दुष्प्राप इति मे मतिः ॥**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥३६॥**

असंयतात्मनेति । असंयतात्मना अभ्यासवैराग्याभ्यामसंयत आत्मा अंतःकरणं यस्य सोऽयमसंयतात्मा तेनासंयतात्मना योगो दुष्प्रापो दुःखेन प्राप्यत इति मे मतिः । यस्तु पुनर्वश्यात्मा अभ्यासवैराग्याभ्यां वश्यत्वमापादित आत्मा मनो यस्य सोऽयं वश्यात्मा तेन वश्यात्मना तु यतता भूयोऽपि प्रयत्नं कुर्वता शक्योऽवाप्तुं योग उपायतो यथोक्तादुपायात् ॥३६॥

तत्र योगाभ्यासांगीकरणेन इहलोकपरलोकप्राप्तिनिमित्तानि कर्माणि संन्यस्तानि, योगसिद्धिफलं च मोक्षसाधनं सम्यग्दर्शनं न प्राप्तमिति, योगी योगमार्गान्मरणकाले चलितचित्त इति तस्य नाशमाशंक्य अर्जुन उवाच—

**अर्जुन उवाच ।**

**अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ॥**

अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥३७॥

अयतिरिति । अयतिरप्रयत्नवान्योगमार्गे श्रद्धया आस्तिक्यबुद्ध्या चोपेतो अंतकाले च योगात् चलितं मानसं मनो यस्य स चलितमानसो भ्रष्टस्मृतिः सोऽप्राप्य योगसंसिद्धिं योगफलं सम्यग्दर्शनं कां गतिं हे कृष्ण गच्छति ॥३७॥

कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ॥
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥३८॥

कच्चिदिति । कच्चित्किं नोभयविभ्रष्टः कर्ममार्गाद्योगमार्गाच्च विभ्रष्टः संश्छिन्नाभ्रमिव नश्यति, किं वा न नश्यत्यप्रतिष्ठो निराश्रयो हे महाबाहो विमूढः सन्ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे ॥३८॥

एतन्मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः ॥
त्वदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते ॥३९॥

एतदिति । एतन्मे मम संशयं कृष्ण च्छेत्तुमपनेतुमर्हस्यशेषतः । त्वदन्यस्त्वत्तोऽन्य ऋषिर्देवो वा च्छेत्ता नाशयिता संशयस्यास्य न हि यस्मादुपपद्यते न संभवति । अतस्त्वमेव च्छेत्तुमर्हसीत्यर्थः ॥३९॥

श्रीभगवानुवाच ।

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ॥
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥४०॥

पार्थेति । हे पार्थ नैवेह लोके नामुत्र परस्मिन्वा लोके विनाशस्तस्य विद्यते नास्ति । नाशो नाम पूर्वस्माद्धीनजन्मप्राप्तिः स योगभ्रष्टस्य नास्ति । न हि यस्मात्कल्याणकृच्छुभकृत्कश्चित् दुर्गतिं कुत्सितां गतिं हे तात, तनोत्यात्मानं पुत्ररूपेणेति पिता तात उच्यते । पितैव पुत्र इति पुत्रोऽपि तात उच्यते । शिष्योऽपि पुत्र उच्यते । यतो न गच्छति ॥४०॥

किं त्वस्य भवति—

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ॥

**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥४१॥**

प्राप्येति । योगमार्गे प्रवृत्तः संन्यासी सामर्थ्यात्प्राप्य गत्वा पुण्यकृताम-श्वमेधादियाजिनां लोकान्, तत्र चोषित्वा वासमनुभूय शाश्वतीर्नित्याः समाः संवत्सरान्, तद्भोगक्षये शुचीनां यथोक्तकारिणां श्रीमतां विभूतिमतां गेहे गृहे योगभ्रष्टोऽभिजायते ॥४१॥

**अथवा योगिनामेव कुले भवति धीमताम् ॥**
**एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥४२॥**

अथेति । अथवा श्रीमतां कुलादन्यस्मिन्योगिनामेव दरिद्राणां कुले भवति जायते धीमतां बुद्धिमताम् । एतद्धि जन्म, यद्दरिद्राणां योगिनां कुले, दुर्लभतरं दुःखलभ्यतरं पूर्वमपेक्ष्य लोके जन्म यदीदृशं यथोक्तविशेषणे कुले ॥४२॥

यस्मात्—

**तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ॥**
**यतते च ततो भूयः संसिद्धौ कुरुनंदन ॥४३॥**

तत्रेति । तत्र योगिनां कुले तं बुद्धिसंयोगं बुद्ध्या संयोगं बुद्धिसंयोगं लभते पौर्वदेहिकं पूर्वस्मिन्देहे भवं पौर्वदेहिकम् । यतते च प्रयत्नं करोति च ततस्तस्मात्पूर्वकृतात्संस्कारात् भूयो बहुतरं संसिद्धौ संसिद्धिनिमित्तं हे कुरुनंदन ॥४३॥

कथं पूर्वदेहबुद्धिसंयोग इति तदुच्यते—

**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ॥**
**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥४४॥**

पूर्वाभ्यासेनेति । यः पूर्वजन्मनि कृतोऽभ्यासः स पूर्वाभ्यासस्तेनैव बलवता ह्रियते संसिद्धौ हि यस्मादवशोऽपि स योगभ्रष्टः । न कृतं चेद्योगाभ्या-सजात्संस्काराद्बलवत्तरमधर्मादिलक्षणं कर्म, तदा योगाभ्यासजनितेन संस्कारेण ह्रियते । अधर्मश्चेद्बलवत्तरः कृतस्तेन योगजोऽपि संस्कारोऽभिभूयत एव ।

तत्क्षये तु योगजः संस्कारः स्वयमेव कार्यमारभते, न दीर्घकालस्थस्यापि विनाशस्तस्यास्तीत्यर्थः । अतः जिज्ञासुरपि योगस्य स्वरूपं ज्ञातुमिच्छन्नपि योगमार्गे प्रवृत्तः संन्यासी योगभ्रष्टः, सामर्थ्यात्सोऽपि शब्दब्रह्म वेदोक्तकर्मानुष्ठानफलमतिवर्ततेऽतिक्रामति अपाकरिष्यति, किमुत बुद्ध्वा यो योगं तन्निष्ठोऽभ्यासं कुर्यात् ॥४४॥

कुतश्च योगित्वं श्रेय इति—

**प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ॥**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥४५॥**

प्रयत्नादिति । प्रयत्नाद्यतमानोऽधिकं यतमान इत्यर्थः । तत्र योगी विद्वान्संशुद्धकिल्बिषो विशुद्धकिल्बिषः संशुद्धपापोऽनेकजन्मसंसिद्धोऽनेकेषु जन्मसु किंचित्किंचित्संस्कारजातमुपचित्य तेनोपचितेनानेकजन्मकृतेन संसिद्धोऽनेकजन्मसंसिद्धस्ततो लब्धसम्यग्दर्शनः सन् याति परां प्रकृष्टां गतिम् ॥४५॥

यस्मादेवं तस्मात्—

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ॥**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥४६॥**

तपस्विभ्य इति । तपस्विभ्योऽधिको योगी, ज्ञानिभ्योऽपि, ज्ञानमत्र शास्त्रार्थपांडित्यं, तद्वद्भ्योऽपि मतो ज्ञातोऽधिकः श्रेष्ठ इति । कर्मिभ्यः, अग्निहोत्रादि कर्म, तद्वद्भ्योऽधिको योगी विशिष्टो यस्मात्तस्माद्योगी भवार्जुन ॥४६॥

**योगिनामपि सर्वेषां मद्गतेनांतरात्मना ॥**
**श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥४७॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ध्यानयोगो नाम षष्ठोऽध्यायः ॥६॥

योगिनामिति । योगिनामपि सर्वेषां रुद्रादित्यादिध्यानपराणां मध्ये

मद्गतेन मयि वासुदेवे समाहितेनांतरात्मनांत:करणेन श्रद्धावाञ्श्रद्दधानः सन्भजते सेवते यो मां स मे मम युक्ततमोऽतिशयेन युक्तो मतोऽभिप्रेत इति॥४७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवत: कृतौ श्रीमद्भगवद्गीताभाष्ये ध्यानयोगो नाम षष्ठोऽध्यायः ॥६॥

---

## अथ सप्तमोऽध्यायः ।

'योगिनामपि सर्वेषां मद्गतेनांतरात्मना । श्रद्धावान्भजते यो मां स मे युक्ततमो मत:' [गी.६.४७] इति प्रश्नबीजमुपन्यस्य स्वयमेव ईदृशं मदीयं तत्त्वं एवं मद्गतांतरात्मा स्यात् इत्येतद्विवक्षु: श्रीभगवानुवाच—

श्रीभगवानुवाच ।

मय्यासक्तमना: पार्थ योगं युंजन्मदाश्रय: ॥
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥१॥

मय्यासक्तमना इति । मयि वक्ष्यमाणविशेषणे परमेश्वरे आसक्तं मनो यस्य स मय्यासक्तमना:, हे पार्थ योगं युंजन्मन:समाधानं कुर्वन्मदाश्रयोऽहमेव परमेश्वर आश्रयो यस्य स मदाश्रय: । यो हि कश्चित्पुरुषार्थेन केनचिदर्थी भवति स तत्साधनं कर्माग्निहोत्रादि तपो दानं वा किंचिदाश्रयं प्रतिपद्यतेऽयं तु योगी मामेवाश्रयं प्रतिपद्यते हित्वान्यत्साधनान्तरं मय्येवासक्तमना भवति । यस्त्वं एवंभूत: सन्नसंशयं समग्रं समस्तं विभूतिबलशक्त्यैश्वर्यादिगुणसंपन्नं मां यथा येन प्रकारेण ज्ञास्यसि संशयमंतरेण एवमेव भगवान् इति तच्छृणु उच्यमानं मया ॥१॥

तच्च मद्विषयम्—

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषत: ॥
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥२॥

ज्ञानमिति । ज्ञानं ते तुभ्यमहं सविज्ञानं विज्ञानसहितं स्वानुभवयुक्तमिदं वक्ष्यामि कथयिष्याम्यशेषतः कार्त्स्न्येन । तज्ज्ञानं विवक्षितं स्तौति श्रोतुरभिमुखीकरणाय—यज्ज्ञात्वा यज्ज्ञानं ज्ञात्वा नेह भूयः पुनरन्यत् ज्ञातव्यं पुरुषार्थसाधनमवशिष्यते नावशिष्टं भवति । इति मत्तत्त्वज्ञो यः स सर्वज्ञो भवतीत्यर्थः । अतो विशिष्टफलत्वात् दुर्लभं ज्ञानम् ॥२॥

कथमित्युच्यते—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ॥
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥३॥

मनुष्याणामिति । मनुष्याणां मध्ये सहस्रेष्वनेकेषु कश्चिद्यतति प्रयत्नं करोति सिद्धये सिद्ध्यर्थम् । तेषां यततामपि सिद्धानां, सिद्धा एव हि ते ये मोक्षाय यतन्ते, तेषां कश्चिदेव मां वेत्ति तत्त्वतो यथावत् ॥३॥

श्रोतारं प्ररोचनेनाभिमुखीकृत्याह—

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ॥
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥४॥

भूमिरिति । भूमिरिति पृथिवीतन्मात्रमुच्यते, न स्थूला, 'भिन्ना प्रकृतिरष्टधा' इति वचनात् । तथा अबादयोऽपि तन्मात्राण्येवोच्यन्ते । आपोऽनलो वायुः खम् । मन इति मनसः कारणमहंकारो गृह्यते । बुद्धिरित्यहंकारकारणं महत्तत्त्वम् । अहंकार इत्यविद्यासंयुक्तमव्यक्तम् । यथा विषसंयुक्तमन्नं विषमित्युच्यते, एवमहंकारवासनावदव्यक्तं मूलकारणमहंकार इत्युच्यते, प्रवर्तकत्वादहंकारस्य । अहंकार एव हि सर्वस्य प्रवृत्तिबीजं दृष्टं लोके । इतीयं यथोक्ता प्रकृतिर्मे ममैश्वरी मायाशक्तिरष्टधा भिन्ना भेदमागता ॥४॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ॥
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥५॥

अपरेति । अपरा न परा निकृष्टा अशुद्धा अनर्थकरी संसारबंधनात्मिकेयम् । इतोऽस्या यथोक्तायास्त्वन्यां विशुद्धां प्रकृतिं ममात्मभूतां विद्धि मे परां

प्रकृष्टां जीवभूतां क्षेत्रज्ञलक्षणां प्राणधारणनिमित्तभूतां, हे महाबाहो, यया प्रकृत्येदं धार्यते जगदंतःप्रविष्टया ॥५॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ॥
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥६॥

एतदिति । एतद्योनीनि एते परापरे क्षेत्रक्षेत्रज्ञलक्षणे प्रकृती योनिः येषां भूतानां तान्येतद्योनीनि, भूतानि सर्वाणीत्येवमुपधारय जानीहि । यस्मात्मम प्रकृती योनिः कारणं सर्वभूतानामतोऽहं कृत्स्नस्य समस्तस्य जगतः प्रभव उत्पत्तिः प्रलयो विनाशस्तथा । प्रकृतिद्वयद्वारेणाहं सर्वज्ञ ईश्वरो जगतः कारणमित्यर्थः ॥६॥

यतस्तस्मात्—

मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ॥
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥७॥

मत्त इति । मत्तः परमेश्वरात्परतरमन्यत्कारणान्तरं किंचिन्नास्ति न विद्यतेऽहमेव जगत्कारणमित्यर्थः हे धनंजय । यस्मादेवं तस्मान्मयि परमेश्वरे सर्वाणि भूतानि सर्वमिदं जगत्प्रोतमनुस्यूतमनुगतमनुविद्धं ग्रथितमित्यर्थः, दीर्घतंतुषु पटवत्सूत्रे च मणिगणा इव ॥७॥

केन केन धर्मेण विशिष्टे त्वयि सर्वमिदं प्रोतमित्युच्यते—

रसोऽहमप्सु कौंतेय प्रभास्मि शशिसूर्ययोः ॥
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥८॥

रस इति । रसोऽहमपां यः सारः स रसस्तस्मिन्रसभूते मय्यापः प्रोता इत्यर्थः । एवं सर्वत्र । यथाऽहमप्सु रस, एवं प्रभास्मि शशिसूर्ययोः । प्रणव ओंकारः सर्ववेदेषु, तस्मिन्प्रणवभूते मयि सर्वे वेदाः प्रोताः । तथा खे आकाशे शब्दः सारभूतः, तस्मिन्मयि खं प्रोतम् । तथा पौरुषं पुरुषस्य भावो पौरुषं यतः पुंबुद्धिर्नृषु, तस्मिन्मयि पुरुषाः प्रोताः ॥८॥

पुण्यो गंधः पृथिव्यां च तेजश्चास्मि विभावसौ ॥

जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥९॥

पुण्य इति । पुण्यः सुरभिर्गंधः पृथिव्यां चाहं, तस्मिन्मयि गंधभूते पृथिवी प्रोता । पुण्यत्वं गंधस्य स्वभावत एव पृथिव्यां दर्शितं अबादिषु रसादेः पुण्यत्वोपलक्षणार्थम् । अपुण्यत्वं तु गंधादीनामविद्याधर्माद्यपेक्षं संसारिणां भूतविशेषसंसर्गनिमित्तं भवति । तेजश्च दीप्तिश्चास्मि विभावसावग्नौ । तथा जीवनं सर्वभूतेषु, येन जीवन्ति सर्वाणि भूतानि तज्जीवनम् । तपश्चास्मि तपस्विषु, तस्मिंस्तपसि मयि तपस्विनः प्रोताः ॥९॥

बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ॥
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥१०॥

बीजमिति । बीजं प्ररोहकारणं मां विद्धि सर्वभूतानां हे पार्थ सनातनं चिरंतनम् । किंच बुद्धिर्विवेकशक्तिरंतःकरणस्य बुद्धिमतां विवेकशक्तिमतामस्मि, तेजः प्रागल्भ्यं तद्वतां तेजस्विनामहम् ॥१०॥

बलं बलवतां चाहं कामरागविवर्जितम् ॥
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥११॥

बलमिति । बलं सामर्थ्यमोजो बलवतामहम् । तच्च बलं कामरागविवर्जितं, कामश्च रागश्च कामरागौ । कामस्तृष्णा असंनिकृष्टेषु विषयेषु, रागो रंजना प्राप्तेषु विषयेषु, ताभ्यां कामरागाभ्यां विवर्जितं देहादिधारणमात्रार्थं बलं सत्त्वमहमस्मि, न तु यत्संसारिणां तृष्णारागकारणम् । किंच धर्माविरुद्धो धर्मेण शास्त्रार्थेनाविरुद्धो यः प्राणिषु भूतेषु कामो, यथा देहधारणमात्राद्यर्थोऽशनपानादिविषयः स कामोऽस्मि हे भरतर्षभ ॥११॥

किंच—

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ॥
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥१२॥

ये इति । ये चैव सात्त्विकाः सत्त्वनिर्वृत्ता भावाः पदार्था, राजसा रजोनिर्वृत्ताः, तामसास्तमोनिर्वृत्ताश्च, ये केचित्प्राणिनां स्वकर्मवशाज्जायन्ते

भावाः तान्मत्त एव जायमानानित्येवं विद्धि सर्वान्समस्तानेव। यद्यपि ते मत्तो जायन्ते तथापि न त्वहं तेषु तदधीनस्तद्वशो यथा संसारिणः ते पुनर्मयि मद्वशा मदधीनाः ॥१२॥

एवंभूतमपि परमेश्वरं नित्यशुद्धबुद्धमुक्तस्वभावं सर्वभूतात्मानं निर्गुणं संसारदोषबीजप्रदाहकारणं मां नाभिजानाति जगदित्यनुक्रोशं दर्शयति भगवान्। तच्च किंनिमित्तं जगतोऽज्ञानमित्युच्यते—

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ॥
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥१३॥

त्रिभिरिति। त्रिभिर्गुणमयैर्गुणविकारै रागद्वेषमोहादिप्रकारैर्भावैः पदार्थैरेभिर्यथोक्तैः सर्वमिदं प्राणिजातं जगन्मोहितमविवेकितामापादितं सन्नाभिजानाति माम् एभ्यो यथोक्तेभ्यो गुणेभ्यः परं व्यतिरिक्तं विलक्षणं चाव्ययं व्ययरहितं जन्मादिसर्वभावविकारवर्जितमित्यर्थः ॥१३॥

कथं पुनर्दैवीमेतां त्रिगुणात्मिकां वैष्णवीं मायामतिक्रामन्तीत्युच्यते—

दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥१४॥

दैवीति। दैवी देवस्य ममेश्वरस्य विष्णोः स्वभूता हि यस्मादेषा यथोक्ता गुणमयी मम माया दुरत्यया दुःखेनात्ययोऽतिक्रमणं यस्याः सा दुरत्यया। तत्रैवं सति सर्वधर्मान्परित्यज्य मामेव मायाविनं स्वात्मभूतं सर्वात्मना ये प्रपद्यन्ते ते मायामेतां सर्वभूतमोहिनीं तरन्त्यतिक्रामन्ति, संसारबंधनान्मुच्यन्ते इत्यर्थः ॥१४॥

यदि त्वां प्रपन्ना मायामेतां तरन्ति, कस्मात्त्वामेव सर्वे न प्रपद्यन्ते इत्युच्यते—

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ॥
माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥१५॥

न मामिति। न मां परमेश्वरं नारायणं दुष्कृतिनः पापकारिणो मूढाः

प्रपद्यन्ते नराधमा नराणां मध्येऽधमा निकृष्टाः । ते च माययापहृतज्ञानाः संमुषितज्ञाना आसुरं भावं हिंसानृतादिलक्षणमाश्रिताः ॥१५॥

ये पुनर्नरोत्तमाः पुण्यकर्माणः—

**चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ॥**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥१६॥**

चतुर्विधा इति । चतुर्विधाश्चतुःप्रकारा भजन्ते सेवन्ते मां जनाः सुकृतिनः पुण्यकर्माणो हेऽर्जुन । आर्त आर्तिपरिगृहीतस्तस्करव्याघ्ररोगादिनाभिभूत आपन्नो, जिज्ञासुर्भगवत्तत्त्वं ज्ञातुमिच्छति यः, अर्थार्थी धनकामो, ज्ञानी विष्णोस्तत्त्वविच्च हे भरतर्षभ ॥१६॥

**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥१७॥**

तेषामिति । तेषां चतुर्णां मध्ये ज्ञानी तत्त्ववित्तत्त्ववित्त्वान्नित्ययुक्तो भवत्येकभक्तिश्चान्यस्य भजनीयस्यादर्शनादतः स एकभक्तिर्विशिष्यते विशेषमाधिक्यमापद्यतेऽतिरिच्यत इत्यर्थः । प्रियो हि यस्मादहमात्मा ज्ञानिनोऽतस्तस्याहमत्यर्थं प्रियः । प्रसिद्धं हि लोक आत्मा प्रियो भवतीति । तस्माज्ज्ञानिन आत्मत्वाद्वासुदेवः प्रियो भवतीत्यर्थः । स च ज्ञानी मम वासुदेवस्यात्मैवेति ममात्यर्थं प्रियः ॥१७॥

न तर्ह्यार्तादयस्त्रयो वासुदेवस्य प्रियाः । न, किं तर्हि—

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥**
**आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥१८॥**

उदारा इति । उदारा उत्कृष्टाः सर्व एवैते, त्रयोऽपि मम प्रिया एवेत्यर्थः । न हि कश्चिन्मद्भक्तो मम वासुदेवस्याप्रियो भवति । ज्ञानी त्वत्यर्थं प्रियो भवतीति विशेषः । तत्कस्मादित्यत आह ज्ञानी त्वात्मैव नान्यो मत्त इति मे मम मतं निश्चयः । आस्थित आरोढुं प्रवृत्तः स ज्ञानी हि यस्मात् अहमेव भगवान्वासुदेवो नान्योऽस्मि इत्येवं युक्तात्मा समाहितचित्तः सन्मा-

मेव परं ब्रह्म गन्तव्यमनुत्तमां गतिं गन्तुं प्रवृत्तः इत्यर्थः ॥१८॥

ज्ञानी पुनरपि स्तूयते—

**बहूनां जन्मनामंते ज्ञानवान्मां प्रपद्यते ॥**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥१९॥**

बहूनामिति । बहूनां जन्मनां ज्ञानार्थसंस्काराश्रयाणामंते समाप्तौ ज्ञानवान्प्राप्तपरिपाकज्ञानो मां वासुदेवं प्रत्यगात्मानं प्रत्यक्षतः प्रपद्यते । कथं, वासुदेवः सर्वमिति । य एवं सर्वात्मानं मां नारायणं प्रतिपद्यते स महात्मा, न तत्समोऽन्योऽस्त्यधिको वा। अतः सुदुर्लभो 'मनुष्याणां सहस्रेषु' [गी.७.३] इत्युक्तम् ॥१९॥

आत्मैव सर्वो वासुदेव इत्येवमप्रतिपत्तौ कारणमुच्यते—

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ॥**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥२०॥**

कामैरिति । कामैस्तैस्तैः पुत्रपशुस्वर्गादिविषयैर्हृतज्ञाना अपहृतविवेकविज्ञानाः प्रपद्यन्तेऽन्यदेवताः प्राप्नुवन्ति वासुदेवादात्मनोऽन्या देवताः, तं तं नियमं देवताराधने प्रसिद्धो यो यो नियमस्तं तमास्थायाश्रित्य प्रकृत्या स्वभावेन जन्मान्तरार्जितसंस्कारविशेषेण नियता नियमिताः स्वया आत्मीयया॥२०॥

तेषां च कामिनाम्—

**यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ॥**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥२१॥**

यो य इति । यो यः कामी यां यां देवतातनुं श्रद्धया संयुक्तो भक्तश्च सन्नर्चितुं पूजयितुमिच्छति तस्य तस्य कामिनोऽचलां स्थिरां श्रद्धां तामेव विदधामि स्थिरीकरोमि ययैव पूर्वं प्रवृत्तः ॥२१॥

स्वभावतो यो यां देवतातनुं श्रद्धया अर्चितुमिच्छति—

**स तया श्रद्धया युक्तस्तस्या राधनमीहते ॥**
**लभते च ततः कामान्मयैव विहितान् हि तान् ॥२२॥**

स तयेति । स तया मद्विहितया श्रद्धया युक्तः संस्तस्या देवतातन्वा राधनमाराधनमीहते चेष्टते । लभते च ततस्तस्या आराधितायाः देवतातन्वाः कामानीप्सितान्मयैव परमेश्वरेण सर्वज्ञेन कर्मफलविभागज्ञतया विहितान्निर्मितां-स्तान्, हि यस्मात्ते भगवता विहिताः कामास्तस्मात्तानवश्यं लभते इत्यर्थः । हितान् इति पदच्छेदे हितत्वं कामानामुपचरितं कल्प्यं, न हि कामा हिताः कस्यचित् ॥२२॥

यस्मादंतवत्साधनव्यापारा अविवेकिनः कामनश्च ते अतः—

अंतवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ॥
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥२३॥

अंतवदिति । अंतवद्विनाशि तु फलं तेषां तद्भवत्यल्पमेधसामल्पप्रज्ञा-नाम् । देवान्देवयजो यान्ति देवान्यजन्ते इति देवयजः, ते देवान्यान्ति । मद्भक्ता यान्ति मामपि । एवं समानेऽप्यायासे मामेव न प्रपद्यन्तेऽनंतफलाय, अहो खलु कष्टं वर्तन्ते, इत्यनुक्रोशं दर्शयति भगवान् ॥२३॥

किंनिमित्तं मामेव न प्रपद्यन्ते इत्युच्यते—

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ॥
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥२४॥

अव्यक्तमिति । अव्यक्तमप्रकाशं व्यक्तिमापन्नं प्रकाशं गतमिदानीं मन्यन्ते मां नित्यप्रसिद्धमीश्वरमपि सन्तमबुद्धयोऽविवेकिनः परं भावं परमात्म-स्वरूपमजानन्तोऽविवेकिनो ममाव्ययं व्ययरहितमनुत्तमं निरतिशयं मदीयं भावमजानन्तो मन्यन्त इत्यर्थः ॥२४॥

तदीयमज्ञानं किंनिमित्तमित्युच्यते—

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ॥
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥२५॥

नाहमिति । नाहं प्रकाशः सर्वस्य लोकस्य केषांचिदेव मद्भक्तानां प्रकाशोऽहमित्यभिप्रायः । योगमायासमावृतो योगो गुणानां युक्तिर्घटनं सैव

माया योगमाया, तया योगमायया समावृतः संछन्न इत्यर्थः। अत एव मूढो लोकोऽयं नाभिजानाति मामजमव्ययम्। यया योगमायया समावृतं मां लोको नाभिजानाति नासौ योगमाया मदीया सती ममेश्वरस्य मायाविनो ज्ञानं प्रतिबध्नाति यथान्यस्यापि मायाविनो माया ज्ञानं तद्वत् ॥२५॥

यत एवमतः—

**वेदाहं समतीतानि वर्तमानानि चार्जुन ॥**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥२६॥**

वेदेति। अहं तु वेद जाने समतीतानि समतिक्रान्तानि भूतानि, वर्तमानानि चार्जुन, भविष्याणि च भूतानि वेदाहं, मां तु वेद न कश्चन मद्भक्तं मच्छरणमेकं मुक्त्वा। मत्तत्त्ववेदनाभावादेव न मां भजते ॥२६॥

केन पुनर्मत्तत्त्ववेदनप्रतिबंधेन प्रतिबद्धानि सन्ति जायमानानि सर्वभूतानि मां न विदन्तीत्यपेक्षायामिदमाह—

**इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन भारत ॥**
**सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥२७॥**

इच्छेति। इच्छाद्वेषसमुत्थेनेच्छा च द्वेषश्चेच्छाद्वेषौ ताभ्यां समुत्तिष्ठतीतीच्छाद्वेषसमुत्थस्तेनेच्छाद्वेषसमुत्थेन। केनेति विशेषापेक्षायामिदमाह द्वंद्वमोहेन द्वंद्वनिमित्तो मोहो द्वंद्वमोहः तेन। तावेवेच्छाद्वेषौ शीतोष्णवत्परस्परविरुद्धौ सुखदुःखतद्धेतुविषयौ यथाकालं सर्वभूतैः संबध्यमानौ द्वंद्वशब्देनाभिधीयेते। तत्र यदेच्छाद्वेषौ सुखदुःखतद्धेतुसंप्राप्त्या लब्धात्मकौ भवतस्तदा तौ सर्वभूतानां प्रज्ञायाः स्ववशापादनद्वारेण परमार्थात्मतत्त्वविषयज्ञानोत्पत्तिप्रतिबंधकारणं मोहं जनयतः। न हि इच्छाद्वेषदोषवशीकृतचित्तस्य यथाभूतार्थविषयज्ञानमुत्पद्यते बहिरपि, किमु वक्तव्यं ताभ्यामाविष्टबुद्धेः संमूढस्य प्रत्यगात्मनि बहुप्रतिबंधे ज्ञानं नोत्पद्यत इति। अतस्तेनेच्छाद्वेषसमुत्थेन द्वंद्वमोहेन, भारत भरतान्वयज, सर्वभूतानि संमोहितानि सन्ति संमोहं संमूढतां सर्गे जन्मनि, उत्पत्तिकाल इत्येतत्, यान्ति गच्छन्ति हे परंतप। मोहवशान्येव सर्वभूतानि

जायमानानि जायन्त इत्यभिप्रायः । यत एवमतस्तेन द्वंद्वमोहेन प्रतिबद्धप्रज्ञानानि सर्वभूतानि संमोहितानि मामात्मभूतं न जानन्ति अत एवात्मभावेन मां न भजन्ते ॥२७॥

के पुनरनेन द्वंद्वमोहेन निर्मुक्ताः सन्तस्त्वा विदित्वा यथाशास्त्रमात्मभावेन भजन्त इत्यपेक्षितमर्थं दर्शयितुमुच्यते—

येषां त्वंतगतं पापं जनानां पुण्यकर्मणाम् ॥
ते द्वंद्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥२८॥

येषामिति । येषां तु पुनरंतगतं समाप्तप्रायं क्षीणं पापं जनानां पुण्यकर्मणां पुण्यं कर्म येषां सत्त्वशुद्धिकारणं विद्यते ते पुण्यकर्माणस्तेषां पुण्यकर्मणां, ते द्वंद्वमोहनिर्मुक्ता यथोक्तेन द्वंद्वमोहेन निर्मुक्ता भजन्ते मां परमात्मानं दृढव्रताः । एवमेव परमार्थतत्त्वं नान्यथेत्येवं सर्वपरित्यागव्रतेन निश्चितविज्ञाना दृढव्रता उच्यन्ते ॥२८॥

ते किमर्थं भजन्त इत्युच्यते—

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ॥
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥२९॥

जरेति । जरामरणमोक्षाय जरामरणयोर्मोक्षार्थं मां परमेश्वरमाश्रित्य मत्समाहितचित्ताः सन्तो यतन्ति प्रयतन्ते ये ते यद्ब्रह्म परं तद्विदुः कृत्स्नं समस्तमध्यात्मं प्रत्यगात्मविषयं वस्तु तद्विदुः, कर्म चाखिलं समस्तं विदुः॥२९॥

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ॥
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥३०॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥७॥

साधीति । साधिभूताधिदैवमधिभूतं चाधिदैवं चाधिभूताधिदैवं, सहाधिभूताधिदैवेन वर्तते इति साधिभूताधिदैवं च मां ये विदुः, साधियज्ञं च

सहाधियज्ञेन साधियज्ञं ये विदुः, प्रयाणकाले मरणकालेऽपि च मां ते विदुर्युक्तचेतसः समाहितचित्ता इति ॥३०॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥७॥

---

## अथ अष्टमोऽध्यायः ।

'ते ब्रह्म तद्विदुः कृत्स्नम्' [गी.७.२९] इत्यादिना भगवतार्जुनस्य प्रश्नबीजान्युपदिष्टानि । अतस्तत्प्रश्नार्थं अर्जुन उवाच—

**अर्जुन उवाच ।**

**किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ॥**
**अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥१॥**
**अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ॥**
**प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥२॥**

एषां प्रश्नानां यथाक्रमं निर्णयाय श्रीभगवानुवाच—

**श्रीभगवानुवाच ।**

**अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ॥**
**भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥३॥**

अक्षरमिति । अक्षरं न क्षरतीति अक्षरं, परमात्मा ''एतस्य वा अक्षरस्य प्रशासने गार्गि'' [बृ.३.८.९] इति श्रुतेः । ओंकारस्य च 'ओमित्येकाक्षरं ब्रह्म' [गी.८.१३] इति परेण विशेषणादग्रहणम् । परमामिति च निरतिशये ब्रह्मण्यक्षर उपपन्नतरं विशेषणम् । तस्यैव परस्य ब्रह्मणः प्रतिदेहं प्रत्यगात्मभावः स्वभावः स्वो भावोऽध्यात्ममुच्यते । आत्मानं देहमाधिकृत्य प्रत्यगात्मतया प्रवृत्तं परमार्थब्रह्मावसानं वस्तु स्वभावोऽध्यात्ममुच्यतेऽध्यात्मश-

ब्देनाभिधीयते । भूतभावोद्भवकरो भूतानां भावो भूतभावस्तस्योद्भवो भूतभावोद्भवस्तं करोतीति भूतभावोद्भवकरो भूतवस्तूत्पत्तिकर इत्यर्थः । विसर्गो विसर्जनं देवतोद्देशेन चरुपुरोडाशादेर्द्रव्यस्य परित्यागः, स एष विसर्गलक्षणो यज्ञः कर्मसंज्ञितः कर्मशब्दित इत्येतत्। एतस्माद्धि बीजभूतात् वृष्ट्यादिक्रमेण स्थावरजंगमानि भूतान्युद्भवन्ति ॥३॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ॥
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥४॥

अधिभूतमिति । अधिभूतं प्राणिजातमधिकृत्य भवतीति । कोऽसौ, क्षरः क्षरतीति क्षरो विनाशी, भावो यत्किंचिज्जनिमद्वस्त्वित्यर्थः । पुरुषः पूर्णमनेन सर्वमिति, पुरि शयनाद्वा, पुरुष आदित्यान्तर्गतो हिरण्यगर्भः सर्वप्राणिकरणानामनुग्राहकः सोऽधिदैवतम् । अधियज्ञः सर्वयज्ञाभिमानिनी विष्ण्वाख्या देवता "यज्ञो वै विष्णुः" [तै.सं.१.७.४] इति श्रुतेः । स हि विष्णुरहमेव, अत्रास्मिन्देहे यो यज्ञस्तस्याहमधियज्ञः, यज्ञो हि देहनिर्वर्त्यत्वेन देहसमवायीति देहाधिकरणो भवति, देहभृतां वर ॥४॥

अंतकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ॥
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥५॥

अंतकाल इति । अंतकाले च मरणकाले मामेव परमेश्वरं विष्णुं स्मरन्मुक्त्वा परित्यज्य कलेवरं शरीरं यः प्रयाति गच्छति स मद्भावं वैष्णवं तत्त्वं याति । नास्ति न विद्यतेऽत्रास्मिन्नर्थे संशयो याति वा न वेति ॥५॥

न मद्विषय एवायं नियमः, किं तर्हि—

यं यं वापि स्मरन्भावं त्यजत्यंते कलेवरम् ॥
तं तमेवैति कौंतेय सदा तद्भावभावितः ॥६॥

यमिति । यं यं वापि यं यं भावं देवताविशेषं स्मरंश्चिंतयंस्त्यजति परित्यजत्यंते अंतकाले प्राणवियोगकाले कलेवरं शरीरं तं तमेव स्मृतं भावमेवैति नान्यं कौन्तेय, सदा सर्वदा तद्भावभावितस्तस्मिन्भावस्तद्भावः स भावि-

तः स्मर्यमाणतयाभ्यस्तो येन स तद्भावभावितः सन् ॥६॥

यस्मादेवमंत्या भावना देहान्तरप्राप्तौ कारणम्—

तस्मात्सर्वेषु कालेषु मामनुस्मर युद्ध्य च ॥
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥७॥

तस्मादिति । तस्मात्सर्वेषु कालेषु मामनुस्मर, यथाशास्त्रं युध्य च युद्धं च स्वधर्मं कुरु । मयि वासुदेवेऽर्पिते मनोबुद्धी यस्य तव स त्वं मय्यर्पितमनोबुद्धिः सन्मामेव यथास्मृतमेष्यस्यागमिष्यासि, असंशयो न संशयोऽत्र विद्यते ॥७॥

किंच—

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ॥
परमं पुरुषं दिव्यं याति पार्थानुचिंतयन् ॥८॥

अभ्यासेति । अभ्यासयोगयुक्तेन मयि चित्तसमर्पणविषयभूत एकस्मिंस्तुल्यप्रत्ययावृत्तिलक्षणो विलक्षणप्रत्ययानन्तरितोऽभ्यासः स चाभ्यासो योगस्तेन युक्तं तत्रैव व्यापृतं योगिनश्चेतस्तेन, चेतसा नान्यगामिना नान्यत्र विषयान्तरे गन्तुं शीलमस्येति नान्यगामि तेन नान्यगामिना, परमं निरतिशयं पुरुषं दिव्यं दिवि सूर्यमंडले भवं याति गच्छति हे पार्थ, अनुचिंतयञ्शास्त्राचार्योपदेशमनुध्यायन्नित्येतत् ॥८॥

किंविशिष्टं च पुरुषं यातीत्युच्यते—

कविं पुराणमनुशासितार-
मणोरणीयांसमनुस्मरेद्यः ॥
सर्वस्य धातारमचिंत्यरूप-
मादित्यवर्णं तमसः परस्तात् ॥९॥

कविमिति । कविं क्रान्तदर्शिनं सर्वज्ञं पुराणं चिरंतनमनुशासितारं सर्वस्य जगतः प्रशासितारमणोः सूक्ष्मादप्यणीयांसं सूक्ष्मतरमनुस्मरेदनुचिंतयेद्यः कश्चित्, सर्वस्य कर्मफलजातस्य धातारं विधातारं विचित्रतया प्राणिभ्यो

विभक्तारं, अचिंत्यरूपं नास्य रूपं नियतं विद्यमानमपि केनचिच्चिंतयितुं शक्यत इत्यचिंत्यरूपस्तं, आदित्यवर्णमादित्यस्येव नित्यचैतन्यप्रकाशो वर्णो यस्य तमादित्यवर्णं, तमसः परस्तादज्ञानलक्षणान्मोहांधकारात्परं तमनुचिंतय-न्यातीति पूर्वेण संबंधः ॥९॥

किंच—

प्रयाणकाले मनसाचलेन
भक्त्या युक्तो योगबलेन चैव ॥
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥१०॥

प्रयाणेति । प्रयाणकाले मरणकाले मनसाऽचलेन चलनवर्जितेन भक्त्या युक्तो भजनं भक्तिस्तया युक्तो योगबलेन चैव योगस्य बलं योगबलं समाधि-जसंस्कारप्रचयजनितचित्तस्थैर्यलक्षणं योगबलं तेन च युक्त इत्यर्थः । पूर्वं हृदयपुंडरीके वशीकृत्य चित्तं तत ऊर्ध्वगामिन्या नाड्या भूमिजयक्रमेण भ्रुवो-र्मध्ये प्राणमावेश्य स्थापयित्वा सम्यगप्रमत्तः सन्स एवं विद्वान्योगी 'कविं पु-राणं' [गी.८.९] इत्यादिलक्षणं तं परं पुरुषमुपैति प्रतिपद्यते दिव्यं द्योतना-त्मकम् ॥१०॥

पुनरपि वक्ष्यमाणेनोपायेन प्रतिपित्सितस्य ब्रह्मणो वेदविद्वदनादिविशे-षणविशेष्यस्याभिधानं करोति भगवान्—

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः ॥
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण प्रवक्ष्ये ॥११॥

यदिति । यदक्षरं न क्षरतीत्यक्षरमविनाशि वेदविदो वेदार्थज्ञा वदन्ति "तद्वा एतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" [बृ.३.८.८] इति श्रुतेः, सर्व-विशेषनिवर्तकत्वेनाभिवदन्ति "अस्थूलमनणु" [बृ.३.८.८] इत्यादि । किंच

विशन्ति प्रविशन्ति सम्यग्दर्शनप्राप्तौ सत्यां यद्यतयो यतनशीलाः संन्यासिनो वीतरागा वीतो विगतो रागो येभ्यस्ते वीतरागाः । यच्चाक्षरमिच्छन्तो -ज्ञातुमिति वाक्यशेषः- ब्रह्मचर्यं गुरौ चरन्ति आचरन्ति तत्ते पदं तदक्षराख्यं पदं पदनीयं ते तुभ्यं संग्रहेण संग्रहः संक्षेपस्तेन संक्षेपेण प्रवक्ष्ये कथयिष्यामि ॥

"स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोंकारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति । तस्मै स होवाच एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः" [प्रश्न.५.१,२] इत्युपक्रम्य "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स सामभिरुन्नीयते सोमलोकम्" [प्रश्न.५.४] इत्यादिना वचनेन "अन्यत्र धर्मादन्यत्राधर्मात्" [कठ.२.१४] इति चोपक्रम्य "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्" [कठ.२.१५] इत्यादिभिश्च वचनैः परस्य ब्रह्मणो वाचकरूपेण, प्रतिमावत्प्रतीकरूपेण वा, परब्रह्मप्रतिपत्तिसाधनत्वेन मंदमध्यमबुद्धीनां विवक्षितस्योंकारस्योपासनं कालान्तरे मुक्तिफलमुक्तं यत्तदेवेहापि 'कविं पुराणमनुशासितारम् ' [गी.८.९], 'यदक्षरं वेदविदो वदन्ति' [गी.८.११] इति चोपन्यस्तस्य परस्य ब्रह्मणः पूर्वोक्तरूपेण प्रतिपत्त्युपायभूतस्योंकारस्य कालान्तरमुक्तिफलमुपासनं योगधारणासहितं वक्तव्यं, प्रसक्तानुप्रसक्तं च यत्किंचित्, इत्येवमर्थ उत्तरो ग्रंथ आरभ्यते—

सर्वद्वाराणि संयम्य मनो हृदि निरुद्ध्य च ॥
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥१२॥

सर्वेति । सर्वद्वाराणि सर्वाणि च तानि द्वाराणि च सर्वद्वाराण्युपलब्धौ तानि सर्वाणि संयम्य संयमनं कृत्वा मनो हृदि हृदयपुंडरीके निरुध्य निरोधं कृत्वा निष्प्रचारमापाद्य, तत्र वशीकृतेन मनसा हृदयादूर्ध्वगामिन्या नाड्योर्ध्वमारुह्य मूर्ध्नि आधायात्मनः प्राणमास्थितः प्रवृत्तो योगधारणां धारयितुम् ॥१२॥

तत्रैव च धारयन्—

ॐ इत्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ॥
य: प्रयाति त्यजन्देहं स याति परमां गतिम् ॥१३॥

ओमिति । ओमित्येकाक्षरं ब्रह्म ब्रह्मणोऽभिधानभूतमोंकारं व्याहरन्नुच्चारयंस्तदर्थभूतं मामीश्वरमनुस्मरन्ननुचिंतयन्यः प्रयाति म्रियते, स त्यजन्परित्यजन्देहं शरीरं —त्यजन्देहमिति प्रयाणविशेषणार्थं देहत्यागेन प्रयाणमात्मनो न स्वरूपनाशेनेत्यर्थः— स एवं त्यजन्याति गच्छति परमां प्रकृष्टां गतिम् ॥१३॥

किंच—

अनन्यचेताः सततं यो मां स्मरति नित्यशः ॥
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥१४॥

अनन्यचेता इति । अनन्यचेता नान्यविषये चेतो यस्य सोऽयमनन्यचेता योगी सततं सर्वदा यो मां परमेश्वरं स्मरति नित्यशः । सततमिति नैरंतर्यमुच्यते, नित्यश इति दीर्घकालत्वमुच्यते । न षण्मासं संवत्सरं वा किं तर्हि यावज्जीवं नैरंतर्येण यो मां स्मरतीत्यर्थः । तस्य योगिनोऽहं सुलभः सुखेन लभ्यः हे पार्थ, नित्ययुक्तस्य सदा समाहितचित्तस्य योगिनः । यत एवमतोऽनन्यचेताः सन्मयि सदा समाहितो भवेत् ॥१४॥

तव सौलभ्येन किं स्यादित्युच्यते शृणु तन्मम सौलभ्येन यद्भवति—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ॥
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥१५॥

मामिति । मामुपेत्य मामीश्वरमुपेत्य मद्भावमापन्न पुनर्जन्म पुनरुत्पत्तिं नाप्नुवन्ति न प्राप्नुवन्ति । किंविशिष्टं पुनर्जन्म न प्राप्नुवन्तीति तद्विशेषणमाह दुःखालयं दुःखानामाध्यात्मिकादीनामालयमाश्रयमालीयन्ते यस्मिन्दुःखानीति दुःखालयं जन्म । न केवलं दुःखालयमशाश्वतमनवस्थितस्वरूपं च । नाप्नुवन्तीदृशं पुनर्जन्म महात्मानो यतयः संसिद्धिं मोक्षाख्यां परमां प्रकृष्टां गताः प्राप्ताः । ये पुनर्मां न प्राप्नुवन्ति ते पुनरावर्तन्ते ॥१५॥

किं पुनस्त्वत्तोऽन्यत्प्राप्ताः पुनरावर्तन्त इत्युच्यते—

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ॥
मामुपेत्य तु कौंतेय पुनर्जन्म न विद्यते ॥१६॥

आब्रह्मेति। आब्रह्मभुवनाद्भवन्ति अस्मिन्भूतानीति भुवनं ब्रह्मभुवनं ब्रह्मलोक इत्यर्थः। आब्रह्मभुवनात्सह ब्रह्मभुवनेन लोकाः सर्वे पुनरावर्तिनः पुनरावर्तनस्वभावा हेऽर्जुन। मामेकमुपेत्य तु कौन्तेय पुनर्जन्म पुनरुत्पत्तिर्न विद्यते॥

ब्रह्मलोकसहिता लोकाः कस्मात्पुनरावर्तिनः कालपरिच्छिन्नत्वात्। कथम्—

सहस्रयुगपर्यंतमहर्यद्ब्रह्मणो विदुः ॥
रात्रिं युगसहस्रांतां तेऽहोरात्रविदो जनाः ॥१७॥

सहस्रेति। सहस्रयुगपर्यंतं सहस्राणि युगानि पर्यंतः पर्यवसानं यस्याह्नस्तदहः सहस्रयुगपर्यंतं ब्रह्मणः प्रजापतेर्विराजो विदुः, रात्रिमपि युगसहस्रान्तामहःपरिमाणामेव। के विदुरित्याह तेऽहोरात्रविदः कालसंख्याविदो जना इत्यर्थः। यत एवं कालपरिच्छिन्नास्तेऽतः पुनरावर्तिनो लोकाः ॥१७॥

प्रजापतेरहनि यद्भवति रात्रौ च तदुच्यते—

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ॥
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥१८॥

अव्यक्तादिति। अव्यक्तादव्यक्तं प्रजापतेः स्वापावस्था तस्मादव्यक्ताद्व्यक्तयो व्यज्यन्त इति व्यक्तयः स्थावरजंगमलक्षणाः सर्वाः प्रजाः प्रभवन्त्यभिव्यज्यन्तेऽह्न आगमोऽहरागमस्तस्मिन्नहरागमे काले ब्रह्मणः प्रबोधकाले। तथा रात्र्यागमे ब्रह्मणः स्वापकाले प्रलीयन्ते सर्वा व्यक्तयस्तत्रैव पूर्वोक्तेऽव्यक्तसंज्ञके ॥१८॥

अकृताभ्यागमकृतविप्रणाशदोषपरिहारार्थं, बंधमोक्षशास्त्रप्रवृत्तिसाफल्यप्रदर्शनार्थं, अविद्यादिक्लेशमूलकर्माशयवशाच्चावशो भूतग्रामो भूत्वा भूत्वा प्रलीयते इत्यतः संसारे वैराग्यप्रदर्शनार्थं च, इदमाह—

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ॥
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥१९॥

भूतग्राम इति । भूतग्रामो भूतसमुदायः स्थावरजंगमलक्षणो यः पूर्वस्मिन्कल्प आसीत्स एवायं नान्यो भूत्वा भूत्वा अहरागमे, प्रलीयते पुनः पुना रात्र्यागमेऽह्नः क्षयेऽवशोऽस्वतंत्र एव, हे पार्थ, प्रभवति जायते अवश एवाहरागमे ॥१९॥

यदुपन्यस्तमक्षरं तस्य प्राप्त्युपायो निर्दिष्ट 'ओमित्येकाक्षरं ब्रह्म' [गी. ८.१३] इत्यादिना । अथेदानीमक्षरस्यैव स्वरूपनिर्दिदिक्षयेदमुच्यतेऽनेन योगमार्गेणेदं गन्तव्यमिति—

परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ॥
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥२०॥

पर इति । परो व्यतिरिक्तो भिन्नः । कुतस्तस्मात्पूर्वोक्तात् । तुशब्दोऽक्षरस्य विवक्षितस्याव्यक्ताद्वैलक्षण्यविशेषणार्थः । भावोऽक्षराख्यं परं ब्रह्म । व्यतिरिक्तत्वे सत्यपि सालक्षण्यप्रसंगोऽस्तीति तद्विनिवृत्त्यर्थमाह अन्य इति । अन्यो विलक्षणः स चाव्यक्तोऽनिंद्रियगोचरः । परस्तस्मादित्युक्तं, कस्मात्पुनः परः ? पूर्वोक्ताद्भूतग्रामबीजभूतादविद्यालक्षणादव्यक्तात् अन्यो विलक्षणो भाव इत्यभिप्रायः । सनातनश्चिरंतनः यः स भावः सर्वेषु भूतेषु ब्रह्मादिषु नश्यत्सु न विनश्यति ॥२०॥

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ॥
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥२१॥

अव्यक्त इति । योऽसावव्यक्तोऽक्षर इत्युक्तस्तमेवाक्षरसंज्ञकमव्यक्तं भावमाहुः परमां प्रकृष्टां गतिम् । यं भावं प्राप्य गत्वा न निवर्तन्ते संसाराय तद्धाम स्थानं परमं प्रकृष्टं मम विष्णोः परमं पदमित्यर्थः ॥२१॥

तल्लब्धेरुपाय उच्यते—

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ॥
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥२२॥

पुरुष इति । पुरुषः पुरि शयनात्पूर्णत्वाद्वा स परः पार्थ परो निराति-

क्षयो यस्मात्पुरुषान्न परं किंचित्। स भक्त्या लभ्यस्तु ज्ञानलक्षणयानन्ययात्मविषयया। यस्य पुरुषस्यान्तःस्थानि मध्यस्थानि भूतानि कार्यभूतानि। कार्यं हि कारणस्यान्तर्वर्ति भवति। येन पुरुषेण सर्वमिदं जगत्ततं व्याप्तमाकाशेनेव घटादि ॥२२॥

प्रकृतानां योगिनां प्रणवावेशितब्रह्मबुद्धीनां कालान्तरमुक्तिभाजां ब्रह्मप्रतिपत्तय उत्तरो मार्गो वक्तव्य इति 'यत्र काल' इत्यादि विवक्षितार्थसमर्पणार्थमुच्यते, आवृत्तिमार्गोपन्यास इतरमार्गस्तुत्यर्थः—

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ॥**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥२३॥**

यत्रेति। यत्र काले प्रयाता इति व्यवहितेन संबंधः। यत्र यस्मिन्काले त्वनावृत्तिमपुनर्जन्म आवृत्तिं तद्विपरीतां चैव। योगिन इति योगिनः कर्मिणश्चोच्यन्ते। कर्मिणस्तु गुणतः 'कर्मयोगेण योगिनाम्' [गी.३.३] इति विशेषणात् योगिनः। यत्र काले प्रयाता मृता योगिनोऽनावृत्तिं यान्ति, यत्र काले च प्रयाता आवृत्तिं यान्ति, तं कालं वक्ष्यामि भरतर्षभ ॥२३॥

तं कालमाह—

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ॥**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥२४॥**

अग्निरिति। अग्निः कालाभिमानिनी देवता। तथा ज्योतिरपि देवतैव कालाभिमानिनी। अथवा अग्निज्योतिषी यथाश्रुते एव देवते। भूयसा तु निर्देशो 'यत्र काले' 'तं कालं' इत्याम्रवणवत्। तथाऽहर्देवता अहरभिमानिनी, शुक्लः शुक्लपक्षदेवता, षण्मासा उत्तरायणं, तत्रापि देवतैव मार्गभूतेति स्थितोऽन्यत्रायं न्यायः। तत्र तस्मिन्मार्गे प्रयाता मृता गच्छन्ति ब्रह्म ब्रह्मविदो ब्रह्मोपासका ब्रह्मोपासनपरा जनाः। क्रमेणेति वाक्यशेषः। न हि सद्योमुक्तिभाजां सम्यग्दर्शननिष्ठानां गतिरागतिर्वा क्वचिदस्ति "न तस्य प्राणा उत्क्रामन्ति" [बृ.४.४.६] इति श्रुतेः। ब्रह्मसंलीनप्राणा एव ते ब्रह्ममया ब्रह्मभूता एव ते ॥

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ॥
तत्र चांद्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥२५॥

धूम इति । धूमो रात्रिर्धूमाभिमानिनी रात्र्यभिमानिनी च देवता । तथा कृष्णः कृष्णपक्षदेवता । षण्मासा दक्षिणायनमिति च पूर्ववद्देवतैव । तत्र चंद्रमसि भवं चांद्रमसं ज्योतिः फलमिष्टादिकारी योगी कर्मी प्राप्य भुक्त्वा तत्क्षयादिह पुनः निवर्तते ॥२५॥

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ॥
एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥२६॥

शुक्लेति । शुक्लकृष्णे शुक्ला च कृष्णा च शुक्लकृष्णे । ज्ञानप्रकाशकत्वाच्छुक्ला तदभावात्कृष्णा । एते शुक्लकृष्णे हि गती जगत इत्यधिकृतानां ज्ञानकर्मणोर्न जगतः सर्वस्यैवैते गती संभवतः । शाश्वते नित्ये संसारस्य नित्यत्वान्मते अभिप्रेते । तत्रैकया शुक्लया यात्यनावृत्तिमन्ययेतरया आवर्तते पुनर्भूयः ॥२६॥

नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ॥
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥२७॥

नैते इति । नैते यथोक्ते सृती मार्गौ पार्थ जानन्संसारायैका, अन्या मोक्षाय चेति, योगी न मुह्यति कश्चन कश्चिदपि । तस्मात्सर्वेषु कालेषु योगयुक्तः समाहितो भवार्जुन ॥२७॥

शृणु तस्य योगस्य माहात्म्यम्—

वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम् ॥
अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥२८॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे

ब्रह्माक्षरनिर्देशो नाम अष्टमोऽध्यायः ॥८॥

वेदेष्विति । वेदेषु सम्यगधीतेषु यज्ञेषु च साद्गुण्येनानुष्ठितेषु तपःसु च सुतप्तेषु दानेषु च सम्यग्दत्तेषु, एतेषु यत्पुण्यफलं प्रदिष्टं शास्त्रेणात्येत्यतीत्य गच्छति तत्सर्वं फलजातम्, इदं विदित्वा सप्तप्रश्ननिर्णयद्वारेणोक्तं अर्थं सम्यगवधार्यानुष्ठाय योगी परं प्रकृष्टमैश्वरं स्थानमुपैति च प्रतिपद्यते, आद्यमादौ भवं, कारणं ब्रह्मेत्यर्थः ॥२८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये ब्रह्माक्षरनिर्देशो नामाष्टमोऽध्यायः ॥८॥

---

## अथ नवमोऽध्यायः

अष्टमे नाडीद्वारेण धारणायोगः सगुण उक्तः । तस्य च फलमग्न्यर्चिरादिक्रमेण कालान्तरे ब्रह्मप्राप्तिलक्षणमेवानावृत्तिरूपं निर्दिष्टम् । तत्रानेनैव प्रकारेण मोक्षप्राप्तिफलमधिगम्यते नान्यथेति तदाशंकाव्याविवर्तयिषया श्रीभगवानुवाच—

**श्रीभगवानुवाच ।**

**इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ॥**
**ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१॥**

इदमिति । इदं ब्रह्मज्ञानं वक्ष्यमाणमुक्तं च पूर्वेष्वध्यायेषु, तत् बुद्धौ संनिधीकृत्य इदमित्याह । तुशब्दो विशेषनिर्धारणार्थः । इदमेव तु सम्यग्ज्ञानं साक्षान्मोक्षप्राप्तिसाधनं 'वासुदेवः सर्वमिति' [गी.७.१९] "आत्मैवेदं सर्वम्" [छां.७.२५.२], "एकमेवाद्वितीयम्" [छां.६.२.१] इत्यादिश्रुतिस्मृतिभ्यः । नान्यत् । "अथ ते येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति"[छां.७.२५] इत्यादिश्रुतिभ्यश्च । ते तुभ्यं गुह्यतमं गोप्यतमं प्रव-

क्ष्यामि कथयिष्याम्यनसूयवेऽसूयारहिताय। किं तत्, ज्ञानं, किंविशिष्टं विज्ञानसहितमनुभवयुक्तम्। यज्ज्ञानं ज्ञात्वा प्राप्य मोक्ष्यसेऽशुभात्संसारबंधनात् ॥१॥

तच्च—

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ॥
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥२॥

राजविद्येति। राजविद्या विद्यानां राजा दीप्त्यतिशयवत्त्वात्। दीप्यते हीयमतिशयेन ब्रह्मविद्या सर्वविद्यानाम्। तथा राजगुह्यं गुह्यानां राजा। पवित्रं पावनमिदमुत्तमं सर्वेषां पावनानां शुद्धिकारणं ब्रह्मज्ञानमुत्कृष्टतमम्। अनेकजन्मसहस्रसंचितमपि धर्माधर्मादि समूलं कर्म क्षणमात्रादेव भस्मीकरोति यतोऽतः किं तस्य पावनत्वं वक्तव्यम्। किंच प्रत्यक्षावगमं प्रत्यक्षेण सुखादेरिवावगमो यस्य तत्प्रत्यक्षावगमम्। अनेकगुणवतोऽपि धर्मविरुद्धत्वं दृष्टं, न तथात्मज्ञानं धर्मविरोधि, किंतु धर्म्यं धर्मादनपेतम्। एवमपि, स्यात् दुःखसंपाद्यमित्यत आह सुसुखं कर्तुं यथा रत्नविवेकविज्ञानम्। तत्राल्पायासानां अन्येषां कर्मणां सुखसंपाद्यानामल्पफलत्वं दुष्कराणां च महाफलत्वं दृष्टमिति, इदं तु सुखसंपाद्यत्वात्फलक्षयाद्व्येतीति प्राप्तमत आहाव्ययं इति। नास्य फलतः कर्मवद्व्ययोऽस्तीत्यव्ययम्। अतः श्रद्धेयमात्मज्ञानम् ॥२॥

ये पुनः—

अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ॥
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥३॥

अश्रद्दधाना इति। अश्रद्दधानाः श्रद्धाविरहिता आत्मज्ञानस्य धर्मस्यास्य स्वरूपे तत्फले च नास्तिकाः पापकारिणोऽसुराणामुपनिषदं देहमात्रात्मदर्शनमेव प्रतिपन्ना असुतृपः पापाः पुरुषाः अश्रद्दधानाः परंतपाप्राप्य मां परमेश्वरं, मत्प्राप्तौ नैवाशंकेति मत्प्राप्तिमार्गभेदभक्तिमात्रमप्यप्राप्येत्यर्थः। निवर्तन्ते निश्चयेन वर्तन्ते। क्व? मृत्युसंसारवर्त्मनि मृत्युयुक्तः संसारो मृत्युसंसारस्तस्य वर्त्म नरकतिर्यगादिप्राप्तिमार्गस्तस्मिन्नेव वर्तन्त इत्यर्थः ॥३॥

स्तुत्या अर्जुनमभिमुखीकृत्याह—

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ।।४।।

मयेति । मया मम यः परो भावस्तेन ततं व्याप्तं सर्वमिदं जगदव्यक्तमूर्तिना न व्यक्ता मूर्तिः स्वरूपं यस्य मम सोऽहमव्यक्तमूर्तिस्तेन मया अव्यक्तमूर्तिना, करणागोचरस्वरूपेणेत्यर्थः । तस्मिन्मय्यव्यक्तमूर्तौ स्थितानि मत्स्थानि सर्वभूतानि ब्रह्मादीनि स्तंबपर्यंतानि । न हि निरात्मकं किंचिद्भूतं व्यवहारायावकल्पते । अतो मत्स्थानि मयात्मनात्मवत्त्वेन स्थितान्यतो मयि स्थितानीत्युच्यन्ते । तेषां भूतानामहमेवात्मा इत्यतस्तेषु स्थित इति मूढबुद्धीनामवभासते अतो ब्रवीमि न चाहं तेषु भूतेष्ववस्थितो मूर्तवत्संश्लेषाभावेनाकाशस्याप्यंतरतमो ह्यहम् । न ह्यसंसर्गि वस्तु क्वचिदाधेयभावेनावस्थितं भवति ।।४।।

अत एवासंसर्गित्वान्मम—

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ।।५।।

न चेति । न च मत्स्थानि भूतानि ब्रह्मादीनि । पश्य मे योगं युक्तिं घटनं मे ममैश्वरमीश्वरस्येममैश्वरं योगमात्मनो याथात्म्यमित्यर्थः । तथा च श्रुतिरसंसर्गित्वादसंगतां दर्शयति "असंगो न हि सज्यते" [बृ.३.९.२६] इति । इदं चाश्चर्यमन्यत्पश्य भूतभृदसंगोऽपि सन्भूतानि बिभर्ति, न च भूतस्थो, यथोक्तेन न्यायेन दर्शितत्वाद्भूतस्थत्वानुपपत्तेः । कथं पुनरुच्यतेऽसौ ममात्मेति, विभज्य देहादिसंघातं तस्मिन्नहंकारमध्यारोप्य लोकबुद्धिमनुसरन्व्यपदिशति ममात्मेति, न पुनरात्मन आत्मान्य इति लोकवदजानन् । तथा भूतभावनो भूतानि भावयत्युत्पादयति वर्धयतीति वा भूतभावनः ।।५।।

यथोक्तेन श्लोकद्वयेनोक्तमर्थं दृष्टान्तेनोपपादयन्नाह—

यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ।।६।।

यथेति । यथा लोक आकाशस्थित आकाशे स्थितो नित्यं सदा वायुः सर्वत्र गच्छतीति सर्वत्रगो महान्परिमाणतः, तथाकाशवत्सर्वगते मय्यसंश्लेषेणैव स्थितानीत्येवमुपधारय विजानीहि ॥६॥

एवं वायुराकाश इव मयि स्थितानि सर्वभूतानि स्थितिकाले, तानि—

सर्वभूतानि कौंतेय प्रकृतिं यान्ति मामिकाम् ॥
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥७॥

सर्वेति । सर्वभूतानि कौन्तेय प्रकृतिं त्रिगुणात्मिकामपरां निकृष्टां यान्ति मामिकां मदीयां कल्पक्षये प्रलयकाले । पुनर्भूयस्तानि भूतान्युत्पत्तिकाले कल्पादौ विसृजाम्युत्पादयाम्यहं पूर्ववत् ॥७॥

एवमविद्यालक्षणाम्—

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ॥
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥८॥

प्रकृतिमिति । प्रकृतिं स्वां स्वीयामवष्टभ्य वशीकृत्य विसृजामि पुनः पुनः प्रकृतितो जातं भूतग्रामं भूतसमुदायमिमं वर्तमानं कृत्स्नं समग्रमवशमस्वतंत्रमविद्यादिदोषैः परवशीकृतं प्रकृतेर्वशात्स्वभाववशात् ॥८॥

तर्हि तस्य ते परमेश्वरस्य, भूतग्रामं इमं विषमं विदधतस्तन्निमित्ताभ्यां धर्माधर्माभ्यां संबंधः स्यादिति, इदमाह भगवान्—

न च मां तानि कर्माणि निबध्नन्ति धनंजय ॥
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥९॥

न चेति । न च मामीश्वरं तानि भूतग्रामस्य विषमसर्गनिमित्तानि कर्माणि निबध्नन्ति धनंजय । तत्र कर्मणामसंबंधित्वे कारणमाह उदासीनवदासीनं यथोदासीन उपेक्षकः कश्चित्तद्वदासीनं, आत्मनोऽविक्रियत्वात्, असक्तं फलासंगरहितमभिमानवर्जितमहं करोमीति तेषु कर्मसु । अतोऽन्यस्यापि कर्तृत्वाभिमानाभावः फलासंगाभावश्चाबंधकारणम्, अन्यथा कर्मभिर्बध्यते मूढः कोशकारवदित्यभिप्रायः ॥९॥

तत्र 'भूतग्राममिमं विसृजामि' [गी.९.८], 'उदासीनवदासीनं' [गी.९.९] इति च विरुद्धमुच्यते, इति तत्परिहारार्थमाह—

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ॥
हेतुनानेन कौंतेय जगद्विपरिवर्तते ॥१०॥

मयेति। मया सर्वतो दृशिमात्रस्वरूपेणाविक्रियात्मनाध्यक्षेण मम माया त्रिगुणात्मिका अविद्यालक्षणा प्रकृतिः सूयत उत्पादयति सचराचरं जगत्। तथा च मंत्रवर्णः— "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" [श्वे.६.११] इति। हेतुना निमित्तेनानेनाध्यक्षत्वेन कौन्तेय जगत्सचराचरं व्यक्ताव्यक्तात्मकं विपरिवर्तते सर्वावस्थासु। दृशिकर्मत्वापत्तिनिमित्ता हि जगतः सर्वा प्रवृत्तिः अहमिदं भोक्ष्ये, पश्यामीदं, शृणोमीदं, सुखमनुभवामि, दुःखमनुभवामि, एतदर्थमिदं करिष्ये, इदं ज्ञास्यामि, इत्याद्या अवगतिनिष्ठा अवगत्यवसानैव। "यो अस्याध्यक्षः परमे व्योमन्" [ऋ.१०.१२९.७] इत्यादयश्च मंत्रा एतमर्थं दर्शयन्ति। ततश्चैकस्य देवस्य सर्वाध्यक्षभूतचैतन्यमात्रस्य परमार्थतः सर्वभोगानभिसंबंधिनोऽन्यस्य चेतनान्तरस्याभावे भोक्तुरन्यस्याभावात्किंनिमित्तेयं सृष्टिरित्यत्र प्रश्नप्रतिवचने अनुपपन्ने "को अद्धा वेद क इह प्रवोचत्कुत आजाता कुत इयं विसृष्टिः" [ऋ.१०.१२९.६] इत्यादिमंत्रवर्णेभ्यः। दर्शितं च भगवता 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जंतवः' [गी.५.१५] इति ॥१०॥

एवं मां नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वजंतूनामात्मानमपि सन्तम्—

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ॥
परं भावमजानन्तो मम भूतमहेश्वरम् ॥११॥

अवजानन्तीति। अवजानन्त्यवज्ञां परिभवं कुर्वन्ति मां मूढा अविवेकिनो मानुषीं मनुष्यसंबंधिनीं तनुं देहमाश्रितं, मनुष्यदेहेन व्यवहरन्तमित्येतत्। परं प्रकृष्टं भावं परमात्मतत्त्वमाकाशकल्पमाकाशादप्यंतरतममजानन्तो मम

भूतमहेश्वरं सर्वभूतानां महान्तमीश्वरं स्वमात्मानम् । ततश्च तस्य ममावज्ञानभावनेनाहता वराकास्ते ॥११॥

कथम्—

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ॥
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥१२॥

मोघाशा इति । मोघाशा वृथा आशा आशिषो येषां ते मोघाशाः, तथा मोघकर्माणो यानि चाग्निहोत्रादीनि तैरनुष्ठीयमानानि कर्माणि तानि च तेषां भगवत्परिभवात्स्वात्मभूतस्यावज्ञानान्मोघान्येव निष्फलानि कर्माणि भवन्तीति मोघकर्माणः । तथा मोघज्ञाना निष्फलज्ञाना ज्ञानमपि तेषां निष्फलमेव स्यात् । विचेतसो विगतविवेकाश्च ते भवन्तीत्यभिप्रायः । किंच ते भवन्ति राक्षसीं रक्षसां प्रकृतिं स्वभावमासुरीमसुराणां च प्रकृतिं मोहिनीं मोहकरीं देहात्मवादिनीं श्रिता आश्रिताः छिंद्धि, भिंद्धि, पिब, खाद, परस्वमपहर, इत्येवंवदनशीलाः क्रूरकर्माणो भवन्तीत्यर्थः । "असुर्या नाम ते लोकाः" [ईश. ३] इति श्रुतेः ॥१२॥

ये पुनः श्रद्दधाना भगवद्भक्तिलक्षणे मोक्षमार्गे प्रवृत्ताः—

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ॥
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥१३॥

महात्मान इति । महात्मानस्त्वक्षुद्रचित्ता मामीश्वरं पार्थ दैवीं देवानां प्रकृतिं शमदमदयाश्रद्धादिलक्षणामाश्रिताः सन्तो भजन्ति सेवन्तेऽनन्यमनसो अनन्यचित्ता ज्ञात्वा भूतादिं भूतानां वियदादीनां प्राणिनां च आदिं कारणमव्ययम् ॥१३॥

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ॥
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥१४॥

सततमिति । सततं सर्वदा भगवन्तं ब्रह्मस्वरूपं मां कीर्तयन्तो, यतन्तश्चेंद्रियोपसंहारशमदमदयाहिंसादिलक्षणैर्धर्मैः प्रयतन्तश्च; दृढव्रता दृढं स्थिर-

सचाल्यं व्रतं येषां ते दृढव्रता नमस्यन्तश्च मां हृदयेशयमात्मानं भक्त्या नित्ययुक्ताः सन्त उपासते सेवन्ते ॥१४॥

ते केन केन प्रकारेणोपासत इत्युच्यते—

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ॥
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥१५॥

ज्ञानयज्ञेनेति । ज्ञानयज्ञेन ज्ञानमेव भगवद्विषयं यज्ञस्तेन ज्ञानयज्ञेन यजन्तः पूजयन्तो मामीश्वरं चाप्यन्येऽन्यामुपासनां परित्यज्योपासते । तच्च ज्ञानमेकत्वेन एकमेव परं ब्रह्म इति परमार्थदर्शनेन यजन्त उपासते । केचिच्च पृथक्त्वेन आदित्यचंद्रादिभेदेन स एव भगवान्विष्णुरवस्थित इत्युपासते । केचिद्बहुधावस्थितः स एव भगवान्सर्वतोमुखो विश्वरूप इति तं विश्वरूपं सर्वतोमुखं बहुधा बहुप्रकारेणोपासते ॥१५॥

यदि बहुभिः प्रकारैरुपासते कथं त्वामेवोपासत इत्यत आह—

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ॥
मंत्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥१६॥

अहमिति । अहं क्रतुः श्रौतकर्मभेदोऽहमेव । अहं यज्ञः स्मार्तः । किंच स्वधा अन्नमहं पितृभ्यो यद्दीयते । अहमौषधं सर्वप्राणिभिर्यदद्यते तदौषधशब्दवाच्यं व्रीहियवादिसाधारणम् । अथवा स्वधेति सर्वप्राणिसाधारणमन्नं, औषधमिति व्याध्युपशमार्थं भेषजम् । मंत्रोऽहं येन पितृभ्यो देवताभ्यश्च हविर्दीयते । अहमेवाज्यं हविश्च । अहमग्निः, यस्मिन्हूयते हविः सोऽग्निरहम् । अहं हुतं हवनकर्म च ॥१६॥

किंच—

पिताहमस्य जगतो माता धाता पितामहः ॥
वेद्यं पवित्रमोंकार ऋक् साम यजुरेव च ॥१७॥

पितेति । पिता जनयिताहमस्य जगतो, माता जनयित्री, धाता कर्मफलस्य प्राणिभ्यो विधाता, पितामहः पितुः पिता, वेद्यं वेदितव्यं पवित्रं

पावनमोंकारः, ऋक्साम यजुरेव च ॥१७॥

किंच—

गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ॥
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥१८॥

गतिरिति । गतिः कर्मफलं, भर्ता पोष्टा, प्रभुः स्वामी, साक्षी प्राणिनां कृताकृतस्य, निवासो यस्मिन्प्राणिनो निवसन्ति, शरणमार्तानां प्रपन्नानामार्तिहरः, सुहृत्प्रत्युपकारानपेक्षः सन्नुपकारी, प्रभव उत्पत्तिर्जगतः, प्रलयः प्रलीयते अस्मिन्निति, तथा स्थानं तिष्ठत्यस्मिन्निति, निधानं निक्षेपः कालान्तरोपभोग्यं प्राणिनां, बीजं प्ररोहकारणं प्ररोहधर्मिणां अव्ययं, यावत्संसारभावित्वादव्ययम् । न ह्यबीजं किंचित्प्ररोहति । नित्यं च प्ररोहदर्शनाद्बीजसंततिर्न व्येतीति गम्यते ॥१८॥

किंच—

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ॥
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥१९॥

तपामीति । तपाम्यहमादित्यो भूत्वा कैश्चिद्रश्मिभिरुल्बणैः । अहं वर्षं कैश्चिद्रश्मिभिरुत्सृजामि । उत्सृज्य पुनर्निगृह्णामि कैश्चिद्रश्मिभिरष्टभिर्मासैः पुनरुत्सृजामि प्रावृषि । अमृतं चैव देवानां मृत्युश्च मर्त्यानाम् । सत् यस्य यत्संबंधितया विद्यमानं तत्, तद्विपरीतमसच्चैवाहमर्जुन । न पुनरत्यंतमेवासद्भगवान्स्वयं कार्यकारणे वा सदसती ॥१९॥

ये पूर्वोक्तैर्निवृत्तिप्रकारैरेकत्वपृथक्त्वादिविज्ञानैर्यज्ञैर्मां पूजयन्त उपासते ज्ञानविदस्ते यथाविज्ञानं मामेव प्राप्नुवन्ति । ये पुनरज्ञाः कामकामाः—

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ॥
ते पुण्यमासाद्य सुरेंद्रलोक-
मश्नन्ति दिव्यान्दिवि देवभोगान् ॥२०॥

त्रैविद्येति । त्रैविद्या ऋग्यजुःसामविदो मां वस्वादिदेवरूपिणं सोमपाः सोमं पिबन्तीति सोमपाः, तेनैव सोमपानेन पूतपापाः शुद्धकिल्बिषा यज्ञैरग्निष्टोमादिभिरिष्ट्वा पूजयित्वा स्वर्गतिं स्वर्गगमनं स्वरेव गतिः स्वर्गतिस्तां प्रार्थयन्ते । ते च पुण्यं पुण्यफलमासाद्य संप्राप्य सुरेंद्रलोकं शतक्रतोः स्थानमश्नन्ति भुंजते दिव्यान्दिवि भवानप्राकृतान्देवभोगान्देवानां भोगान् ॥२०॥

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥२१॥

ते तमिति । ते तं भुक्त्वा स्वर्गलोकं विशालं विस्तीर्णं क्षीणे पुण्ये मर्त्यलोकमिमं विशन्त्याविशन्ति । एवं यथोक्तेन प्रकारेण त्रयीधर्मं केवलं वैदिकं कर्मानुप्रपन्ना गतागतं गतं चागतं च गतागतं गमनागमनं कामकामाः कामान्कामयन्त इति कामकामा लभन्ते गतागतमेव, न तु स्वातंत्र्यं क्वचिल्लभन्त इत्यर्थः ॥२१॥

ये पुनर्निष्कामाः सम्यग्दर्शिनः—

अनन्याश्चिंतयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥२२॥

अनन्या इति । अनन्या अपृथग्भूताः परं देवं नारायणमात्मत्वेन गताः सन्तश्चिंतयन्तो मां ये जनाः संन्यासिनः पर्युपासते, तेषां परमार्थदर्शिनां नित्याभियुक्तानां सतताभियोगिनां योगक्षेमं, योगोऽप्राप्तस्य प्रापणं, क्षेमस्तद्रक्षणं, तदुभयं वहामि प्रापयाम्यहम् । 'ज्ञानी त्वात्मैव मे मतं' [गी.७.१८], 'स च मम प्रियः' [गी.७.१७] यस्मात्तस्मात्ते ममात्मभूताः प्रियाश्चेति ॥ ननु अन्येषामपि भक्तानां योगक्षेमं वहत्येव भगवान् । सत्यं वहत्येव, किं त्वयं विशेषः अन्ये ये भक्तास्ते आत्मार्थं स्वयमपि योगक्षेममीहन्ते, अनन्यदर्शिनस्तु न आत्मार्थं योगक्षेममीहन्ते । न हि ते जीविते मरणे वा आत्मनो गृद्धिं कुर्वन्ति,

केवलमेव भगवच्छरणास्ते । अतो भगवानेव तेषां योगक्षेमं वहतीति ॥२२॥

नन्वन्या अपि देवतास्त्वमेव चेत्तद्भक्ताश्च त्वामेव यजन्ते । सत्यमेवम्—

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ॥
तेऽपि मामेव कौंतेय यजन्त्यविधिपूर्वकम् ॥२३॥

य इति । येऽप्यन्यदेवताभक्ता अन्यासु देवतासु भक्ता अन्यदेवताभक्ताः सन्तो यजन्ते पूजयन्ति श्रद्धया आस्तिक्यबुद्ध्या अन्विता अनुगताः, तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकमविधिरज्ञानं तत्पूर्वकमज्ञानपूर्वकं यजन्त इत्यर्थः ॥२३॥

कस्मात्ते अविधिपूर्वकं यजन्त इत्युच्यते, यस्मात्—

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ॥
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥२४॥

अहमिति । अहं हि सर्वयज्ञानां श्रौतानां स्मार्तानां च सर्वेषां यज्ञानां देवतात्मत्वेन भोक्ता च प्रभुरेव च । मत्स्वामिको हि यज्ञो 'अधियज्ञोऽहमेवात्र' [गी.८.४] इति ह्युक्तम् । तथा न तु मामभिजानन्ति तत्त्वेन यथावत् । अतश्चाविधिपूर्वकमिष्ट्वा यागफलाच्च्यवन्ति प्रच्यवन्ते ते ॥२४॥

येऽप्यन्यदेवताभक्तिमत्त्वेनाविधिपूर्वकं यजन्ते तेषामपि यागफलमवश्यंभावि । कथम्—

यान्ति देवव्रता देवान् पितॄन्यान्ति पितृव्रताः ॥
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥२५॥

यान्तीति । यान्ति गच्छन्ति देवव्रता देवेषु व्रतं नियमो भक्तिश्च येषां ते देवव्रता देवान्यान्ति । पितॄनग्निष्वात्तादीन्यान्ति पितृव्रताः श्राद्धादिक्रियापराः पितृभक्ताः । भूतानि विनायकमातृगणचतुर्भगिन्यादीनि यान्ति भूतेज्या भूतानां पूजकाः । यान्ति मद्याजिनो मद्यजनशीला वैष्णवा मामेव । समानेऽप्यायासे मामेव न भजन्ते अज्ञानात्, तेन तेऽल्पफलभाजो भवन्तीत्यर्थः ॥

न केवलं मद्भक्तानामनावृत्तिलक्षणमनंतफलं, सुखाराधनश्चाहम् । कथम्—

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥२६॥

पत्रमिति । पत्रं पुष्पं फलं तोयमुदकं यो मे मह्यं भक्त्या प्रयच्छति तदहं पत्रादि भक्त्योपहृतं भक्तिपूर्वकं प्रापितं भक्त्युपहृतमश्नामि गृह्णामि प्रयतात्मनः शुद्धबुद्धेः ॥२६॥

यत एवमतः—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥
यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम् ॥२७॥

यदिति । यत्करोषि स्वतः प्राप्तं, यदश्नासि, यच्च जुहोषि हवनं निर्वर्तयसि श्रौतं स्मार्तं वा, यद्ददासि प्रयच्छसि ब्राह्मणादिभ्यो हिरण्यान्नाज्यादि, यत्तपस्यसि तपश्चरसि कौंतेय, तत्कुरुष्व मदर्पणं मत्समर्पणम् ॥२७॥

एवं कुर्वतस्तव यद्भवति तच्छृणु—

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबंधनैः ॥
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥२८॥

शुभेति । शुभाशुभफलैः शुभाशुभे इष्टानिष्टफले येषां तानि शुभाशुभफलानि कर्माणि तैः शुभाशुभफलैः कर्मबंधनैः कर्माण्येव बंधनानि तैः कर्मबंधनैरेवं मदर्पणं कुर्वन्मोक्ष्यसे । सोऽयं संन्यासयोगो नाम, संन्यासश्चासौ मत्समर्पणतया, कर्मत्वाद्योगश्चासावपीति, तेन संन्यासयोगेन युक्त आत्मा अंतःकरणं यस्य तव स त्वं संन्यासयोगयुक्तात्मा सन्विमुक्तः कर्मबंधनैर्जीवन्नेव पतिते चास्मिञ्शरीरे मामुपैष्यस्यागमिष्यसि ॥२८॥

रागद्वेषवांस्तर्हि भगवान्यतो भक्माननुगृह्णाति नेतरानिति । तन्न—

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ॥
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥२९॥

सम इति । समस्तुल्योऽहं सर्वभूतेषु । न मे द्वेष्योऽस्ति न प्रियः । अग्निवदहं, दूरस्थानां यथाग्निः शीतं नापनयति समीपमुपसर्पतामपनयति तथाहं

भक्ताननुगृह्णामि नेतरान् । ये भजन्ति तु मामीश्वरं भक्त्या मयि ते स्वभावत एव न मम रागनिमित्तं वर्तन्ते । तेषु चाप्यहं स्वभावत एव वर्ते नेतरेषु । नैतावता तेषु द्वेषो मम ॥२९॥

शृणु मद्भक्तेर्माहात्म्यम्—

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ॥
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥३०॥

अपीति। अपि चेद्यद्यपि सुदुराचारः सुष्ठु दुराचारः अतीव कुत्सिताचारोऽपि भजते मामनन्यभागनन्यभक्तिः सन्साधुरेव सम्यग्वृत्त एव स मन्तव्यो ज्ञातव्यः सम्यग्यथावत् व्यवसितो हि सः, यस्मात्साधुनिश्चयः सः ॥३०॥

उत्सृज्य च बाह्यां दुराचारतामंतःसम्यग्व्यवसायसामर्थ्यात्—

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ॥
कौंतेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥३१॥

क्षिप्रमिति । क्षिप्रं शीघ्रं भवति धर्मात्मा धर्मचित्त एव, शश्वन्नित्यं शान्तिं चोपशमं निगच्छति प्राप्नोति । शृणु परमार्थं कौन्तेय प्रतिजानीहि निश्चितां प्रतिज्ञां कुरु, न मे मम भक्तो मयि समर्पितान्तरात्मा मद्भक्तो न प्रणश्यतीति ॥३१॥

किंच—

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ॥
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥३२॥

मां हीति । मां हि यस्मात्पार्थ व्यपाश्रित्य मामाश्रयत्वेन गृहीत्वा येऽपि स्युर्भवेयुः पापयोनयः पापा योनिर्येषां ते पापयोनयः पापजन्मानः । के त इत्याह स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति गच्छन्ति परां प्रकृष्टां गतिम् ॥३२॥

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ॥
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥३३॥

किं पुनरिति । किं पुनर्ब्राह्मणाः पुण्याः पुण्ययोनयो भक्ता राजर्षय-

स्तथा राजानश्च ते ऋषयश्चेति राजर्षयः। यत एवमतोऽनित्यं क्षणभंगुरमसुखं च सुखवर्जितमिमं लोकं मनुष्यलोकं प्राप्य पुरुषार्थसाधनं दुर्लभं मनुष्यत्वं लब्ध्वा भजस्व सेवस्व माम् ॥३३॥

कथम्—

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥३४॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥९॥

मन्मना इति। मयि वासुदेवे मनो यस्य तव स त्वं मन्मना भव। तथा मद्भक्तो भव। मद्याजी मद्यजनशीलो भव। मामेव च नमस्कुरु। मामेवेश्वरमेष्यस्यागमिष्यसि युक्त्वा समाधाय चित्तम्। एवमात्मानं, अहं हि सर्वेषां भूतानामात्मा, परा च गतिः, परमयनं, तं मामेवंभूतमेष्यसीत्यतीतेन संबंधः मत्परायणः सन्नित्यर्थः ॥३४॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥९॥

---

## अथ दशमोऽध्यायः।

सप्तमेऽध्याये भगवतस्तत्त्वं विभूतयश्च प्रकाशिता, नवमे च। अथेदानीं येषु येषु भावेषु चिन्त्यो भगवांस्ते ते भावा वक्तव्याः, तत्त्वं च भगवतो वक्तव्यं उक्तमपि दुर्विज्ञेयत्वात्, इत्यतः श्रीभगवानुवाच—

श्रीभगवानुवाच।

**भूय एव महाबाहो शृणु मे परमं वचः ॥**

यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥१॥

भूय इति । भूय एव भूयः पुनर्हे महाबाहो शृणु मे मदीयं परमं प्रकृष्टं निरतिशयवस्तुनः प्रकाशकं वचो वाक्यं यत्परमं ते तुभ्यं प्रीयमाणाय, मद्वचनात्प्रीयसे त्वमतीवामृतमिव पिबंस्ततो, वक्ष्यामि हितकाम्यया हितेच्छया ॥

किमर्थमहं वक्ष्यामीत्यत आह—

न मे विदुः सुरगणाः प्रभवं न महर्षयः ॥
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥२॥

न म इति । न मे विदुर्न जानन्ति सुरगणा ब्रह्मादयः । किं ते न विदुः, मम प्रभवं प्रभावं प्रभुशक्त्यतिशयम्, अथवा प्रभव प्रभवनमुत्पत्तिम् । नापि महर्षयो भृग्वादयो विदुः । कस्मात्ते न विदुरित्युच्यते अहमादिः कारणं हि यस्माद्देवानां महर्षीणां च सर्वशः सर्वप्रकारैः ॥२॥

किंच—

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ॥
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥३॥

य इति । यो मामजमनादिं च, यस्मादहमादिर्देवानां महर्षीणां च न ममान्य आदिर्विद्यतेऽतोऽहमजोऽनादिश्च, अनादित्वमजत्वे हेतुः, तं मामजमनादिं च यो वेत्ति विजानाति लोकमहेश्वरं लोकानां महान्तमीश्वरं तुरीयमज्ञानतत्कार्यवर्जितमसंमूढः संमोहवर्जितः स मर्त्येषु मनुष्येषु सर्वपापैः सर्वैः पापैर्मतिपूर्वामतिपूर्वकृतैः प्रमुच्यते प्रमोक्ष्यते ॥३॥

इतश्चाहं महेश्वरो लोकानाम्—

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ॥
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥४॥

बुद्धिरिति । बुद्धिरंतःकरणस्य सूक्ष्माद्यर्थावबोधनसामर्थ्यम् । तद्वन्तं बुद्धिमानिति हि वदन्ति । ज्ञानमात्मादिपदार्थानामवबोधः । असंमोहः प्रत्युत्पन्नेषु बोद्धव्येषु विवेकपूर्विका प्रवृत्तिः । क्षमा आक्रुष्टस्य ताडितस्य वा अ-

विकृतचित्तता। सत्यं यथादृष्टस्य यथाश्रुतस्य च आत्मानुभवस्य परबुद्धिसंक्रान्तये तथैवोचार्यमाणा वाक्सत्यमुच्यते। दमो बाह्येंद्रियोपशमः। शमोऽतःकरणस्य उपशमः। सुखमाह्लादः। दुःखं संतापः। भव उद्भवः। अभावस्तद्विपर्ययः। भयं च त्रासः। अभयमेव च तद्विपरीतम् ॥४॥

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ॥
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥५॥

अहिंसेति। अहिंसा अपीडा प्राणिनाम्। समता समचित्तता। तुष्टिः संतोषः पर्याप्तबुद्धिर्लाभेषु। तप इंद्रियसंयमपूर्वकं शरीरपीडनम्। दानं यथाशक्ति संविभागः। यशो धर्मनिमित्ता कीर्तिः। अयशस्त्वधर्मनिमित्ता अकीर्तिः। भवन्ति भावा यथोक्ता बुद्ध्यादयो भूतानां प्राणिनां मत्त एवेश्वरात्पृथग्विधा नानाविधाः स्वकर्मानुरूपेण ॥५॥

किंच—

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ॥
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥६॥

महर्षय इति। महर्षयः सप्त भृग्वादयः पूर्वेऽतीतकालसंबंधिनः, चत्वारो मनवस्तथा सावर्णा इति प्रसिद्धाः। ते च मद्भावा मद्गतभावना वैष्णवेन सामर्थ्येनोपेताः, मानसा मनसैवोत्पादिता मया जाता उत्पन्नाः, येषां मनूनां महर्षीणां च सृष्टिर्लोक इमाः स्थावरजंगमलक्षणाः प्रजाः ॥६॥

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ॥
सोऽविकंपेन योगेन युज्यते नात्र संशयः ॥७॥

एतामिति। एतां यथोक्तां विभूतिं विस्तारं योगं च युक्तिं च आत्मनो घटनं, अथवा योगैश्वर्यसामर्थ्यं सर्वज्ञत्वं योगजं योग उच्यते। मम मदीयं योगं यो वेत्ति तत्त्वतस्तत्त्वेन यथावदित्येतत् सोऽविकंपेनाप्रचलितेन योगेन सम्यग्दर्शनस्थैर्यलक्षणेन युज्यते संबध्यते, नात्र संशयो नास्मिन्नर्थे संशयोऽस्ति ॥७॥

कीदृशेनाविकंपेन योगेन युज्यते इत्युच्यते—

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ॥
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥८॥

अहमिति। अहं परं ब्रह्म वासुदेवाख्यं सर्वस्य जगतः प्रभव उत्पत्तिः। मत्त एव स्थितिनाशक्रियाफलोपभोगलक्षणं विक्रियारूपं सर्वं जगत्प्रवर्तते। इत्येवं मत्वा भजन्ते सेवन्ते मां बुधा अवगतपरमार्थतत्त्वाः, भावसमन्विता भावो भावना परमार्थतत्त्वाभिनिवेशस्तेन समन्विताः संयुक्ता इत्यर्थः ॥८॥

किंच—

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ॥
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥९॥

मच्चित्ता इति। मच्चित्ता मयि चित्तं येषां ते मच्चित्ता, मद्गतप्राणा मां गताः प्राप्ताश्चक्षुरादयः प्राणा येषां ते मद्गतप्राणा, मय्युपसंहृतकरणा इत्यर्थः। अथवा मद्गतप्राणा मद्गतजीवना इत्येतत्। बोधयन्तोऽवगमयन्तः परस्परमन्योन्यं, कथयन्तश्च ज्ञानबलवीर्यादिधर्मैर्विशिष्टं मां, तुष्यन्ति च परितोषमुपयान्ति च रमन्ति च रतिं च प्राप्नुवन्ति प्रियसंगत्येव ॥९॥

ये यथोक्तैः प्रकारैर्भजन्ते मां भक्ताः सन्तः—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ॥
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥१०॥

तेषामिति। तेषां सततयुक्तानां नित्याभियुक्तानां निवृत्तसर्वबाह्यैषणानां भजतां सेवमानानां, किमर्थित्वादिना कारणेन नेत्याह प्रीतिपूर्वकं, प्रीतिः स्नेहस्तत्पूर्वकं मां भजतामित्यर्थः। ददामि प्रयच्छामि बुद्धियोगं बुद्धिः सम्यग्दर्शनं मत्तत्त्वविषयं तेन योगो बुद्धियोगस्तं बुद्धियोगं, येन बुद्धियोगेन सम्यग्दर्शनलक्षणेन मां परमेश्वरमात्मभूतमात्मत्वेनोपयान्ति प्रतिपद्यन्ते। के, ते ये मच्चित्तत्वादिप्रकारैर्मां भजन्ते ॥१०॥

किमर्थं कस्य वा त्वत्प्राप्तिप्रतिबंधहेतोर्नाशकं बुद्धियोगं तेषां त्वद्भक्तानां

यदासीत्यपेक्षायामाह—

तेषामेवानुकंपार्थमहमज्ञानजं तमः ॥
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥११॥

तेषामिति । तेषामेव कथं नु नाम श्रेयः स्यादित्यनुकंपार्थं दयाहेतोरहमज्ञानजमविवेकतो जातं मिथ्याप्रत्ययलक्षणं मोहांधकारं तमो नाशयामि, आत्मभावस्थ आत्मनो भावोऽन्तःकरणाशयस्तस्मिन्नेव स्थितः सन्, ज्ञानदीपेन विवेकप्रत्ययरूपेण भक्तिप्रसादस्नेहाभिषिक्तेन मद्भावनाभिनिवेशवातेरितेन ब्रह्मचर्यादिसाधनसंस्कारवत्प्रज्ञावर्तिना विरक्तांतःकरणाधारेण विषयव्यावृत्तचित्तरागद्वेषाकलुषितनिवातापवरकस्थेन नित्यप्रवृत्तैकाग्र्यध्यानजनितसम्यग्दर्शनभास्वता ज्ञानदीपेनेत्यर्थः ॥११॥

यथोक्तां भगवतो विभूतिं योगं च श्रुत्वा अर्जुन उवाच—

अर्जुन उवाच ।

परं ब्रह्म परं धाम पवित्रं परमं भवान् ॥
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥१२॥

परमिति । परं ब्रह्म परमात्मा परं धाम परं तेजः पवित्रं पावनं परमं प्रकृष्टं भवान् । पुरुषं शाश्वतं नित्यं दिव्यं दिवि भवं आदिदेवं सर्वदेवानामादौ भवं आदिदेवमजं विभुं विभवनशीलम् ॥१२॥

ईदृशम्—

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ॥
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥१३॥

आहुरिति । आहुः कथयन्ति त्वामृषयो वसिष्ठादयः सर्वे, देवर्षिर्नारदः, तथा असितो देवलोऽप्येवमेवाह, व्यासश्च, स्वयं चैव त्वं च ब्रवीषि मे ॥

सर्वमेतदृतं मन्ये यन्मां वदसि केशव ॥
न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥१४॥

सर्वमिति । सर्वमेतद्यथोक्तमृषिभिस्त्वया च एतदृतं सत्यमेव मन्ये य-

न्मां प्रति वदसि भाषसे हे केशव । न हि ते तव भगवन्व्यक्तिं प्रभवं विदुर्न देवा न दानवाः ॥१४॥

यतस्त्वं देवादीनामादिरतः—

स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ॥
भूतभावन भूतेश देवदेव जगत्पते ॥१५॥

स्वयमिति । स्वयमेवात्मनात्मानं वेत्थ जानासि त्वं निरतिशयज्ञानैश्वर्यबलादिशक्तिमन्तमीश्वरं पुरुषोत्तम । भूतानि भावयतीति भूतभावनः हे भूतभावन, भूतेश भूतानामीशितः, हे देवदेव जगत्पते ॥१५॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ॥
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥१६॥

वक्तुमिति । वक्तुं कथयितुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः, आत्मनो विभूतयो यास्ता वक्तुमर्हसि । याभिर्विभूतिभिरात्मनो माहात्म्यविस्तरैरिमाँल्लोकांस्त्वं व्याप्य तिष्ठसि ॥१६॥

कथं विद्यामहं योगिंस्त्वां सदा परिचिंतयन् ॥
केषु केषु च भावेषु चिंत्योऽसि भगवन्मया ॥१७॥

कथमिति। कथं विद्यां विजानीयामहं हे योगिंस्त्वां सदा परिचिंतयन् । केषु केषु च भावेषु वस्तुषु चिंत्योऽसि ध्येयोऽसि भगवन्मया ॥१७॥

विस्तरेणात्मनो योगं विभूतिं च जनार्दन ॥
भूयः कथय तृप्तिर्हि श‍ृण्वतो नास्ति मेऽमृतम् ॥१८॥

विस्तरेणेति । विस्तरेणात्मनो योगं योगैश्वर्यशक्तिविशेषं विभूतिं च विस्तरं ध्येयपदार्थानां हे जनार्दन । अर्दतेर्गतिकर्मणो रूपम् । असुराणां देवप्रतिपक्षभूतानां जनानां नरकादिगमयितृत्वाज्जनार्दनः । अभ्युदयनिःश्रेयसपुरुषार्थप्रयोजनं सर्वैर्जनैर्याच्यत इति वा । भूयः पूर्वमुक्तमपि कथय तृप्तिः परितोषो हि यस्मान्नास्ति मे मम श‍ृण्वतस्त्वन्मुखनिःसृतवाक्यामृतम् ॥१८॥

श्रीभगवानुवाच ।

हंत ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यंतो विस्तरस्य मे ।।१९।।

हंत इति। हंतेदानीं ते तव दिव्या दिवि भवा आत्मविभूतय आत्मनो मम विभूतयो यास्ताः कथयिष्यामीत्येतत् । प्राधान्यतो यत्र यत्र प्रधाना या या विभूतिस्तां तां प्रधानां प्राधान्यतः कथयिष्याम्यहं कुरुश्रेष्ठ। अशेषतस्तु वर्षशतेनापि न शक्या वक्तुं यतो नास्त्यंतो विस्तरस्य मे मम विभूतीनामित्यर्थः ।।१९।।

तत्र प्रथममेव तावच्छृणु—

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।।
अहमादिश्च मध्यं च भूतानामंत एव च ।।२०।।

अहमिति । अहमात्मा प्रत्यगात्मा गुडाकेश, गुडाका निद्रा तस्या ईशो गुडाकेशो जितनिद्र इत्यर्थः । घनकेश इति वा । सर्वभूताशयस्थितः सर्वेषां भूतानामाशये अंतर्हृदि स्थितोऽहमात्मा प्रत्यगात्मा नित्यं ध्येयः । तदशक्तेन चोत्तरेषु भावेषु चिंत्योऽहं; यस्मादहमेवादिर्भूतानां कारणं तथा मध्यं च स्थितिरंतः प्रलयश्च ।।२०।।

एवं च ध्येयोऽहम्—

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ।।२१।।

आदित्यानामिति । आदित्यानां द्वादशानां विष्णुर्नामादित्योऽहम् । ज्योतिषां रविः प्रकाशयितॄणामंशुमान्रश्मिमान् ! मरीचिर्नाम मरुतां मरुद्देवताभेदानामस्मि । नक्षत्राणामहं शशी चंद्रमाः ।।२१।।

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।।
इंद्रियाणां मनश्चास्मि भूतानामस्मि चेतना ।।२२।।

वेदानामिति । वेदानां मध्ये सामवेदोऽस्मि । देवानां रुद्रादित्यादिनां वासव इंद्रोऽस्मि । इंद्रियाणामेकादशानां चक्षुरादीनां मनश्चास्मि संकल्पविकल्पात्मकं मनश्चास्मि । भूतानामस्मि चेतना कार्यकरणसंघाते नित्याभिव्यक्ता

बुद्धिवृत्तिश्चेतना ॥२२॥

रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ॥
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥२३॥

रुद्राणामिति । रुद्राणामेकादशानां शंकरश्चास्मि । वित्तेशः कुबेरो यक्षरक्षसां यक्षाणां रक्षसां च । वसूनामष्टानां पावकश्चास्म्यग्निः । मेरुः शिखरिणां शिखरवतामहम् ॥२३॥

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ॥
सेनानीनामहं स्कंदः सरसामस्मि सागरः ॥२४॥

पुरोधसामिति। पुरोधसां च राजपुरोहितानां च मुख्यं प्रधानं मां विद्धि जानीहि हे पार्थ बृहस्पतिम् । स हि इंद्रस्येति मुख्यः स्यात्पुरोधाः । सेनानीनां सेनापतीनामहं स्कंदो देवसेनापतिः । सरसां यानि देवखातानि सरांसि तेषां सरसां सागरोऽस्मि भवामि ॥२४॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ॥
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥२५॥

महर्षीणामिति । महर्षीणां भृगुरहम् । गिरां वाचां पदलक्षणानामेकमक्षरमोंकारोऽस्मि। यज्ञानां जपयज्ञोऽस्मि। स्थावराणां स्थितिमतां हिमालयः ॥

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ॥
गंधर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥२६॥

अश्वत्थ इति । अश्वत्थः सर्ववृक्षाणां, देवर्षीणां च नारदो देवा एव सन्त ऋषित्वं प्राप्ता मंत्रदर्शित्वात्ते देवर्षयस्तेषां नारदोऽस्मि । गंधर्वाणां चित्ररथो नाम गंधर्वोऽस्मि । सिद्धानां जन्मनैव धर्मज्ञानवैराग्यैश्वर्यातिशयं प्राप्तानां कपिलो मुनिः ॥२६॥

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ॥
ऐरावतं गजेंद्राणां नराणां च नराधिपम् ॥२७॥

उच्चैरिति । उच्चैःश्रवसमश्वानां उच्चैःश्रवा नामाश्वराजस्तं मां विद्धि

विजानीह्यमृतोद्भवममृतनिमित्तमथनोद्भवम् । ऐरावतमिरावत्या अपत्यं गजेंद्राणां हस्तीश्वराणां, तं मां विद्धीत्यनुवर्तते । नराणां च मनुष्याणां च नराधिपं राजानं मां विद्धि जानीहि ॥२७॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ॥
प्रजनश्चास्मि कंदर्पः सर्पाणामस्मि वासुकिः ॥२८॥

आयुधानामिति । आयुधानामहं वज्रं दधीच्यस्थिसंभवम् । धेनूनां दोग्ध्रीणामस्मि कामधुक्, वसिष्ठस्य सर्वकामानां दोग्ध्री सामान्या वा कामधुक् । प्रजनः प्रजनयितास्मि कंदर्पः कामः सर्पाणां सर्पभेदानामस्मि वासुकिः सर्पराजः ॥२८॥

अनंतश्चास्मि नागानां वरुणो यादसामहम् ॥
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥२९॥

अनंत इति । अनंतश्चास्मि नागानां नागविशेषाणां नागराजश्चास्मि । वरुणो यादसामहमब्देवतानां राजाहम् । पितॄणामर्यमा नाम पितृराजश्चास्मि । यमः संयमतां संयमनं कुर्वतामहम् ॥२९॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ॥
मृगाणां च मृगेंद्रोऽहं वैनतेयश्च पक्षिणाम् ॥३०॥

प्रह्लाद इति । प्रह्लादो नाम चास्मि दैत्यानां दितिवंश्यानाम् । कालः कलयतां कलनं गणनं कुर्वतामहम् । मृगाणां च मृगेंद्रः सिंहो व्याघ्रो वा अहम् । वैनतेयश्च गरुत्मान्विनतासुतः पक्षिणां पतत्रिणाम् ॥३०॥

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ॥
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥३१॥

पवन इति । पवनो वायुः पवतां पावयितॄणामस्मि । रामः शस्त्रभृतामहं शस्त्राणां धारयितॄणां दाशरथी रामोऽहम् । झषाणां मत्स्यादीनां मकरो नाम जातिविशेषोऽहम् । स्रोतसां स्रवन्तीनामास्मि जाह्नवी गंगा ॥३१॥

सर्गाणामादिरंतश्च मध्यं चैवाहमर्जुन ॥

अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥३२॥

सर्गाणामिति । सर्गाणां सृष्टीनामादिरंतश्च मध्यं चैवाहं उत्पत्तिस्थितिलया अहमर्जुन । भूतानां जीवाधिष्ठितानामेवादिरंतश्चेत्याद्युक्तमुपक्रमे, इह तु सर्वस्यैव सर्गमात्रस्येति विशेषः । अध्यात्मविद्या विद्यानां मोक्षार्थत्वात्प्रधानमस्मि । वादोऽर्थनिर्णयहेतुत्वात्प्रवदतां प्रधानं, अतः सोऽहमस्मि । प्रवक्तृद्वारेण वदनभेदानामेव वादजल्पवितंडानामिह ग्रहणं प्रवदतामिति ॥३२॥

अक्षराणामकारोऽस्मि द्वंद्वः सामासिकस्य च ॥
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥३३॥

अक्षराणामिति । अक्षराणां वर्णानामकारो वर्णोऽस्मि । द्वंद्वः समासोऽस्मि सामासिकस्य च समाससमूहस्य । किं चाहमेवाक्षयोऽक्षीणः कालः प्रसिद्धः क्षणाद्याख्यः, अथवा परमेश्वरः कालस्यापि कालोऽस्मि । धाताहं कर्मफलस्य विधाता सर्वजगतो विश्वतोमुखः सर्वतोमुखः ॥३३॥

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ॥
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥३४॥

मृत्युरिति । मृत्युर्द्विविधो धनादिहरः प्राणहरश्च, तत्र यः प्राणहरः स सर्वहर उच्यते, सोऽहमित्यर्थः । अथवा पर ईश्वरः प्रलये सर्वहरणात्सर्वहरः सोऽहम् । उद्भव उत्कर्षोऽभ्युदयस्तत्प्राप्तिहेतुश्चाहं, केषां? भविष्यतां भाविकल्याणानां उत्कर्षप्राप्तियोग्यानामित्यर्थः । कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमेत्येता उत्तमाः स्त्रीणामहमस्मि, यासामाभासमात्रसंबंधेनापि लोकः कृतार्थमात्मानं मन्यते ॥३४॥

बृहत्साम तथा साम्नां गायत्री छंदसामहम् ॥
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥३५॥

बृहत्सामेति । बृहत्साम तथा साम्नां प्रधानमस्मि । गायत्री छंदसामहं गायत्र्यादिच्छंदोविशिष्टानामृचां गायत्र्यृगहमस्मीत्यर्थः । मासानां मार्गशीर्षोऽहम् । ऋतूनां कुसुमाकरो वसंतः ॥३५॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ॥
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥३६॥

द्यूतमिति । द्यूतमक्षदेवनादिलक्षणं छलयतां छलस्य कर्तॄणामस्मि । तेजस्तेजस्विनामहम् । जयोऽस्मि जेतॄणां, व्यवसायोऽस्मि व्यवसायिनां, सत्त्वं सत्त्ववतां सात्त्विकानामहम् ॥३६॥

वृष्णीनां वासुदेवोऽस्मि पांडवानां धनंजयः ॥
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥३७॥

वृष्णीनामिति । वृष्णीनां यादवानां वासुदेवोऽस्म्ययमेवाहं त्वत्सखा पांडवानां धनंजयस्त्वमेव । मुनीनां मननशीलानां सर्वपदार्थज्ञानिनामप्यहं व्यासः । कवीनां क्रान्तदर्शिनामुशना कविरस्मि ॥३७॥

दंडो दमयतामस्मि नीतिरस्मि जिगीषताम् ॥
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥३८॥

दंड इति । दंडो दमयतां दमयितॄणामस्म्यदान्तानां दमनकारणम् । नीतिरस्मि जिगीषतां जेतुमिच्छताम् । मौनं चैवास्मि गुह्यानां गोप्यानां, ज्ञानं ज्ञानवतामहम् ॥३८॥

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ॥
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥३९॥

यच्चापीति । यच्चापि सर्वभूतानां बीजं प्ररोहकारणं तदहमर्जुन । प्रकरणोपसंहारार्थं विभूतिसंक्षेपमाह न तदस्ति भूतं चराचरं चरमचरं वा मया विना यत्स्याद्भवेत् । मयापकृष्टं परित्यक्तं निरात्मकं शून्यं हि तत्स्यात् । अतो मदात्मकं सर्वमित्यर्थः ॥३९॥

नांतोऽस्ति मम दिव्यानां विभूतीनां परंतप ॥
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥४०॥

नांतोऽस्तीति । नांतोऽस्ति मम दिव्यानां विभूतीनां विस्तराणां परंतप । न हीश्वरस्य सर्वात्मनो दिव्यानां विभूतीनामियत्ता शक्या वक्तुं ज्ञातुं

वा केनचित् । एष तु उद्देशत एकदेशेन प्रोक्तो विभूतेर्विस्तरो मया ॥४०॥

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ॥
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥४१॥

यद्यदिति । यद्यल्लोके विभूतिमद्विभूतियुक्तं सत्त्वं वस्तु श्रीमदूर्जितमेव वा श्रीर्लक्ष्मीस्तया सहितमुत्साहोपेतं वा तत्तदेवावगच्छ त्वं जानीहि ममेश्वरस्य तेजोंऽशसंभवं तेजसः अंश एकदेशः संभवो यस्य तत्तेजोंऽशसंभवमित्यवगच्छ त्वम् ॥४१॥

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ॥
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥४२॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ॥१०॥

अथवेति । अथवा बहुनैतेनैवमादिना किं ज्ञातेन तवार्जुन स्यात्सावशेषेण । अशेषतस्त्वमिममुच्यमानमर्थं शृणु— विष्टभ्य विशेषतः स्तंभनं दृढं कृत्वेदं कृत्स्नं जगदेकांशेनैकावयवेनैकपादेन सर्वभूतस्वरूपेणेत्येतत्, तथा च मंत्रवर्णः "पादोऽस्य विश्वा भूतानि" [ऋ.१०.९०.३] इति, स्थितोऽहमिति ॥४२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये विभूतियोगो नाम दशमोऽध्यायः ॥१०॥

---

## अथ एकादशोऽध्यायः ।

भगवतो विभूतय उक्ताः । तत्र च 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' [गी.१०.४२] इति भगवताभिहितं श्रुत्वा, यज्जगदात्मरूप-

माद्यमैश्वरं तत्साक्षात्कर्तुमिच्छन्, अर्जुन उवाच—

अर्जुन उवाच ।

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ॥
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥१॥

मदिति। मदनुग्रहाय ममानुग्रहार्थं परमं निरतिशयं गुह्यं गोप्यमध्यात्मसंज्ञितमात्मानात्मविवेकविषयं यत्त्वयोक्तं वचो वाक्यं तेन ते वचसा मोहोऽयं विगतो मम अविवेकबुद्धिरपगतेत्यर्थः ॥१॥

किंच—

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ॥
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥२॥

भवेति। भव उत्पत्तिरप्ययः प्रलयः तौ भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया, न संक्षेपतः, त्वत्तस्त्वत्सकाशात्कमलपत्राक्ष कमलस्य पत्रं कमलपत्रं तद्वदक्षिणी यस्य तव स त्वं कमलपत्राक्षो हे कमलपत्राक्ष, माहात्म्यमपि चाव्ययमक्षयं, श्रुतमित्यनुवर्तते ॥२॥

एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ॥
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥३॥

एवमिति। एवमेतन्नान्यथा यथा येन प्रकारेणात्थ कथयसि त्वमात्मानं परमेश्वर। तथापि द्रष्टुमिच्छामि ते तव ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्नमैश्वरं वैष्णवं रूपं पुरुषोत्तम ॥३॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ॥
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥४॥

मन्यस इति। मन्यसे चिंतयसि यदि मयार्जुनेन तच्छक्यं द्रष्टुमिति प्रभो स्वामिन् योगेश्वर योगिनो योगास्तेषामीश्वरो योगेश्वरो हे योगेश्वर। यस्मादहमतीवार्थी द्रष्टुं ततस्तस्मान्मे मदर्थं दर्शय त्वमात्मानमव्ययम् ॥४॥

एवं चोदितोऽर्जुनेन श्रीभगवानुवाच—

श्रीभगवानुवाच ।

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ॥
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥५॥

पश्येति । पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशोऽनेकश इत्यर्थः । तानि च नानाविधान्यनेकप्रकाराणि, दिवि भवानि दिव्यान्यप्राकृतानि, नानावर्णाकृतीनि च नाना विलक्षणा नीलपीतादिप्रकारा वर्णास्तथा आकृतयोऽवयवसंस्थानविशेषो येषां रूपाणां तानि नानावर्णाकृतीनि च ॥५॥

पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ॥
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥६॥

पश्यादित्यानिति । पश्यादित्यान्द्वादश, वसूनष्टौ, रुद्रानेकादश, अश्विनौ द्वौ, मरुतः सप्त सप्त गणा ये तान् । तथा च बहून्यन्यान्यदृष्टपूर्वाणि मनुष्यलोके त्वया त्वत्तोऽन्येन वा केनचित्पश्याश्चर्याण्यद्भुतानि भारत ॥६॥

न केवलमेतावदेव—

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ॥
मम देहे गुडाकेश यच्चान्यत् द्रष्टुमिच्छसि ॥७॥

इहेति । इहैकस्थमेकस्मिन्नेव स्थितं जगत्कृत्स्नं समस्तं पश्याद्येदानीं सचराचरं सह चरेणाचरेण च वर्तते, मम देहे गुडाकेश । यच्चान्यज्जयपराजयादि यच्छंकसे 'यद्वा जयेम यदि वा नो जयेयुः' [गी.२.६] इति यदवोचः, तदपि द्रष्टुं यदीच्छसि ॥७॥

किंतु—

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ॥
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥८

न त्विति । न तु मां विश्वरूपधरं शक्यसे द्रष्टुमनेनैव प्राकृतेन स्वचक्षुषा स्वकीयेन चक्षुषा । येन तु शक्यसे द्रष्टुं दिव्येन तद्दिव्यं ददामि ते तुभ्यं चक्षुः । तेन पश्य मे योगमैश्वरमीश्वरस्य ममैश्वरं योगं योगशक्त्यतिश-

यमित्यर्थः ॥८॥

संजय उवाच।

एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ॥
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥९॥

एवमिति। एवं यथोक्तप्रकारेणोक्त्वा ततोऽनंतरं राजन्धृतराष्ट्र, महायोगेश्वरो महांश्चासौ योगेश्वरश्च हरिर्नारायणो दर्शयामास दर्शितवान्पार्थाय पृथासुताय परमं रूपं विश्वरूपमैश्वरम् ॥९॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ॥
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥१०॥

अनेकेति। अनेकवक्त्रनयनमनेकानि वक्त्राणि नयनानि च यस्मिन्रूपे तदनेकवक्त्रनयनं, अनेकाद्भुतदर्शनमनेकान्यद्भुतानि विस्मापकानि दर्शनानि यस्मिन्रूपे तदनेकाद्भुतदर्शनं, तथानेकदिव्याभरणमनेकानि दिव्यान्याभरणानि यस्मिंस्तदनेकदिव्याभरणं, तथा दिव्यानेकोद्यतायुधं दिव्यान्यनेकान्यस्त्रादीनि उद्यतान्यायुधानि यस्मिंस्तद्दिव्यानेकोद्यतायुध 'दर्शयामास' इति पूर्वेण संबंधः॥

किंच—

दिव्यमाल्यांबरधरं दिव्यगंधानुलेपनम् ॥
सर्वाश्चर्यमयं देवमनंतं विश्वतोमुखम् ॥११॥

दिव्येति। दिव्यमाल्यांबरधरं दिव्यानि माल्यानि पुष्पाणि अंबराणि वस्त्राणि च ध्रियन्ते येनेश्वरेण तं दिव्यमाल्यांबरधरं, दिव्यगंधानुलेपनं दिव्यं गंधानुलेपनं यस्य तं दिव्यगंधानुलेपनं, सर्वाश्चर्यमयं सर्वाश्चर्यप्रायं देवमनंतं नास्यांतोऽस्तीत्यनंतस्तं विश्वतोमुखं सर्वतोमुखं सर्वभूतात्मभूतत्वात्, तं दर्शयामास अर्जुनो ददर्शेति वा अध्याह्रियते ॥११॥

या पुनर्भगवतो विश्वरूपस्य भास्तस्या उपमोच्यते—

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ॥
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥१२॥

दिवीति । दिव्यंतरिक्षे तृतीयस्यां वा दिवि सूर्याणां सहस्रं सूर्यसहस्रं तस्य युगपदुत्थितस्य सूर्यसहस्रस्य या युगपदुत्थिता भाः, सा यदि, सदृशी स्यात्तस्य महात्मनो विश्वरूपस्यैव भासः । यदि वा न स्यात्, ततः विश्वरूपस्यैव भा अतिरिच्यते इत्यभिप्रायः ॥१२॥

किंच—

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ॥
अपश्यद्देवदेवस्य शरीरे पांडवस्तदा ॥१३॥

तत्रेति । तत्र तस्मिन्विश्वरूपे एकस्मिन्स्थितमेकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा देवपितृमनुष्यादिभेदैरपश्यत् दृष्टवान्देवदेवस्य हरेः शरीरे पांडवोऽर्जुनस्तदा ॥१३॥

ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ॥
प्रणम्य शिरसा देवं कृतांजलिरभाषत ॥१४॥

तत इति । ततस्तं दृष्ट्वा स विस्मयेनाविष्टो विस्मयाविष्टो हृष्टानि रोमाणि यस्य सोऽयं हृष्टरोमा चाभवद्धनंजयः । प्रणम्य प्रकर्षेण नमनं कृत्वा प्रह्वीभूतः सञ्शिरसा देवं विश्वरूपधरं कृतांजलिर्नमस्कारार्थे संपुटीकृतहस्तः सन्नभाषतोक्तवान् ॥१४॥

कथं, यत्त्वया दर्शितं विश्वरूपं तदहं पश्यामीति स्वानुभवमाविष्कुर्वन्, अर्जुन उवाच—

अर्जुन उवाच ।

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसंघान् ॥
ब्रह्माणमीशं कमलासनस्थं
ऋषींश्च सर्वानुरगांश्च दिव्यान् ॥१५॥

पश्यामीति । पश्याम्युपलभे हे देव तव देहे देवान्सर्वान्, तथा भूतविशेषसंघान्भूतविशेषाणां स्थावरजंगमानां नानासंस्थानविशेषाणां संघा भूत-

विशेषसंघास्तान् । किंच ब्रह्माणं चतुर्मुखमीशमीशितारं प्रजानां कमलासनस्थं पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थमित्यर्थः । ऋषींश्च वसिष्ठादीन् सर्वान्, उरगांश्च वासुकिप्रभृतीन्दिव्यान् दिवि भवान् ॥१५॥

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वा सर्वतोऽनंतरूपम् ॥
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप ॥१६॥

अनेकेति । अनेकबाहूदरवक्त्रनेत्रमनेके बाहव उदराणि वक्त्राणि नेत्राणि च यस्य तव स त्वमनेकबाहूदरवक्त्रनेत्रस्तमनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वा त्वां सर्वतः सर्वत्र अनंतरूपमनंतानि रूपाण्यस्येत्यनंतरूपस्तमनंतरूपम् । नान्तमंतोऽवसानं, न मध्यं मध्यं नाम द्वयोः कोट्योरंतरं, न पुनस्तवादिं, तव देवस्य नान्तं पश्यामि, न मध्यं पश्यामि, न पुनरादिं पश्यामि, हे विश्वेश्वर हे विश्वरूप ॥१६॥

किंच—

किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतोदीप्तिमन्तम् ॥
पश्यामि त्वां दुर्निरीक्ष्यं समंता-
द्दीप्तानलार्कद्युतिमप्रमेयम् ॥१७॥

किरीटिनमिति । किरीटिनं किरीटं नाम शिरोभूषणविशेषस्तद्यस्यास्ति स किरीटी तं किरीटिनं, तथा गदिनं गदा अस्य विद्यत इति गदी तं गदिनं, तथा चक्रिणं चक्रमस्यास्तीति चक्री तं चक्रिणं च, तेजोराशिं तेजःपुंजं सर्वतोदीप्तिमन्तं सर्वतो दीप्तिरस्यास्तीति सर्वतोदीप्तिमांस्तं सर्वतोदीप्तिमन्तं पश्यामि त्वां दुर्निरीक्ष्यं दुःखेन निरीक्ष्यो दुर्निरीक्ष्यस्तं दुर्निरीक्ष्यं समंतात्समंततः सर्वत्र, दीप्तानलार्कद्युतिं अनलश्चार्कश्चानलार्कौ दीप्तावनलार्कौ दीप्तानलार्कौ तयोर्दीप्तानलार्कयोर्द्युतिरिव द्युतिस्तेजो यस्य तव स त्वं दीप्तानलार्कद्युतिस्तं

त्वां दीप्तानलार्कद्युतिम्, अप्रमेयं न प्रमेयमशक्यपरिच्छेदमित्यर्थः ॥१७॥

इत एव ते योगशक्तिदर्शनादनुमिनोमि—

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ॥
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥१८॥

त्वमिति । त्वमक्षरं न क्षरतीति, परमं ब्रह्म वेदितव्यं ज्ञातव्यं मुमुक्षुभिः । त्वमस्य विश्वस्य समस्तस्य जगतः परं प्रकृष्टं निधानं, निधीयतेऽस्मिन्निति निधानं पर आश्रय इत्यर्थः । किंच त्वमव्ययो न तव व्ययो विद्यते इत्यव्ययः, शाश्वतधर्मगोप्ता शश्वद्भवः शाश्वतो नित्यो धर्मस्तस्य गोप्ता शाश्वतधर्मगोप्ता । सनातनश्चिरंतनस्त्वं पुरुषः परो मतोऽभिप्रेतो मे मम ॥१८॥

किंच—

अनादिमध्यान्तमनंतवीर्य-
मनंतबाहुं शशिसूर्यनेत्रम् ॥
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥१९॥

अनादीति । अनादिमध्यान्तमादिश्च मध्यं चान्तश्च न विद्यते यस्य सोऽयमनादिमध्यान्तस्तं त्वामनादिमध्यान्तं, अनंतवीर्यं न तव वीर्यस्यान्तोऽस्तीत्यनंतवीर्यस्तं त्वामनंतवीर्यं, तथानंतबाहुमनंता बाहवो यस्य तव स त्वमनंतबाहुः तं त्वामनंतबाहुं, शशिसूर्यनेत्रं शशिसूर्यौ नेत्रे यस्य तव स त्वं शशिसूर्यनेत्रस्तं त्वां शशिसूर्यनेत्रं चंद्रादित्यनयनं, पश्यामि त्वां दीप्तहुताशवक्त्रं दीप्तश्चासौ हुताशश्च स वक्त्रं यस्य तव स त्वं दीप्तहुताशवक्त्रस्तं त्वां दीप्तहुताशवक्त्रं, स्वतेजसा विश्वमिदं समस्तं तपन्तं तापयन्तम् ॥१९॥

द्यावापृथिव्योरिदमंतरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः ॥

दृष्ट्वाद्भुतं रूपमिदं तवोग्रं
लोकत्रयं प्रव्यथितं महात्मन् ॥२०॥

द्यावापृथिव्योरिति । द्यावापृथिव्योरिदमंतरं हि अंतरिक्षं व्याप्तं त्वयैकेन विश्वरूपधरेण दिशश्च सर्वा व्याप्ताः । दृष्ट्वोपलभ्याद्भुतं विस्मापकं रूपमिदं तवोग्रं क्रूरं लोकानां त्रयं लोकत्रयं प्रव्यथितं भीतं प्रचलितं वा हे महात्मन्नक्षुद्रस्वभाव ॥२०॥

अथाधुना पुरा 'यद्वा जयेम यदि वा नो जयेयुः' [गी.२.६] इत्यर्जुनस्य यः संशय आसीत्तन्निर्णयाय पांडवजयमैकान्तिकं दर्शयामीति प्रवृत्तो भगवान् । तं पश्यन्नाह,

किंच—

अमी हि त्वा सुरसंघा विशन्ति
केचिद्भीताः प्रांजलयो गृणन्ति ॥
स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥२१॥

अमीति । अमी हि युध्यमाना योद्धारस्त्वा त्वां सुरसंघा येऽत्र भूभारावतारायावतीर्णा वस्वादिदेवसंघा मनुष्यसंस्थानास्त्वां विशन्ति प्रविशन्तो दृश्यन्ते । तत्र केचिद्भीताः प्रांजलयः सन्तो गृणन्ति स्तुवन्ति त्वामन्ये पलायनेऽप्यशक्ताः सन्तः । युद्धे प्रत्युपस्थिते उत्पातादिनिमित्तान्युपलक्ष्य स्वस्त्यस्तु जगत इत्युक्त्वा महर्षिसिद्धसंघा महर्षीणां सिद्धानां च संघाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः संपूर्णाभिः ॥२१॥

किंचान्यत्—

रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ॥
गंधर्वयक्षासुरसिद्धसंघा
वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥२२॥

रुद्रादित्या इति । रुद्रादित्या वसवो ये च साध्या रुद्रादयो गणा विश्वे देवा अश्विनौ च देवौ मरुतश्च, ऊष्मपाश्च पितरो, गंधर्वयक्षासुरसिद्धसंघा गंधर्वा हाहाहूहूप्रभृतयो, यक्षाः कुबेरप्रभृतयः, असुरा विरोचनप्रभृतयः, सिद्धाः कपिलादयः, तेषां संघा गंधर्वयक्षासुरसिद्धसंघाः, ते वीक्षन्ते पश्यन्ति त्वां विस्मिता विस्मयमापन्नाः सन्तस्त एव सर्वे ॥२२॥

यस्मात्—

रूपं महत्ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम् ॥
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥२३॥

रूपमिति । रूपं महदतिप्रमाणं ते तव बहुवक्त्रनेत्रं बहूनि वक्त्राणि मुखानि नेत्राणि चक्षूंषि च यस्मिंस्तद्रूपं बहुवक्त्रनेत्रं, हे महाबाहो, बहुबाहूरुपादं बहवो बाहव ऊरवः पादाश्च यस्मिन्रूपे तद्बहुबाहूरुपादं, किंच बहूदरं बहून्युदराणि यस्मिन्निति बहूदरं, बहुदंष्ट्राकरालं बह्वीभिर्दंष्ट्राभिः करालं विकृतं तद्बहुदंष्ट्राकरालं, दृष्ट्वा रूपमीदृशं लोका लौकिकाः प्राणिनः प्रव्यथिताः प्रचलिता भयेन, तथाहमपि ॥२३॥

तत्रेदं कारणम्—

नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ॥
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विंदामि शमं च विष्णो ॥२४॥

नभःस्पृशमिति । नभःस्पृशं द्युस्पर्शमित्यर्थः, दीप्तं प्रज्वलितं, अनेकवर्णमनेके वर्णा भयंकरा नानासंस्थाना यस्मिंस्त्वयि तं त्वामनेकवर्णं, व्यात्ताननं व्यात्तानि विवृतान्याननानि मुखानि यस्मिंस्त्वयि तं त्वां व्यात्ताननं, दीप्तविशालनेत्रं दीप्तानि प्रज्वलितानि विशालानि विस्तीर्णानि नेत्राणि यस्मिंस्त्वयि

तं त्वां दीप्तविशालनेत्रं दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा प्रव्यथितः प्रभीतोऽन्तरात्मा मनो यस्य मम सोऽहं प्रव्यथितान्तरात्मा सन्धृतिं धैर्यं न विंदामि न लभे शमं चोपशमनं मनस्तुष्टिं हे विष्णो ॥२४॥

कस्मात्—

दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसंनिभानि ॥
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥२५॥

दंष्ट्राकरालानीति । दंष्ट्राकरालानि दंष्ट्राभिः करालानि विकृतानि ते तव मुखानि दृष्ट्वैवोपलभ्य कालानलसंनिभानि प्रलयकाले लोकानां दाहकोऽग्निः कालानलस्तत्सदृशानि कालानलसंनिभानि मुखानि दृष्ट्वेत्येतत्, दिशः पूर्वापरविवेकेन न जाने दिङ्मूढो जातोऽस्मि, अतो न लभे च नोपलभे च शर्म सुखम् । अतः प्रसीद प्रसन्नो भव हे देवेश जगन्निवास ॥२५॥

येभ्यो मम पराजयाशंका आसीत्सा चापगता, यतः—

अमी च त्वां धृतराष्ट्रस्य पुत्राः
सर्वे सहैवावनिपालसंघैः ॥
भीष्मो द्रोणः सूतपुत्रस्तथासौ
सहास्मदीयैरपि योधमुख्यैः ॥२६॥

अमी इति । अमी च त्वां धृतराष्ट्रस्य पुत्रा दुर्योधनप्रभृतयः, 'त्वरमाणा विशन्ति' इति व्यवहितेन संबंधः, सर्वे सहैव सहिता अवनिपालसंघैरवनिं पृथ्वीं पालयन्तीत्यवनिपालास्तेषां संघैः । किंच भीष्मो द्रोणः सूतपुत्रः कर्णस्तथासौ सहास्मदीयैरपि धृष्टद्युम्नप्रभृतिभिर्योधमुख्यैर्योधानां मुख्यैः प्रधानैः सह ॥२६॥

किंच—

वक्त्राणि ते त्वरमाणा विशन्ति

दंष्ट्राकरालानि भयानकानि ॥
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमांगैः ॥२७॥

वक्त्राणीति । वक्त्राणि मुखानि ते तव त्वरमाणास्त्वरायुक्ताः सन्तो विशन्ति । किंविशिष्टानि मुखानि दंष्ट्राकरालानि भयानकानि भयंकराणि । किंच केचिन्मुखानि प्रविष्टानां मध्ये विलग्ना दशनान्तरेषु मांसमिव भक्षितं संदृश्यन्ते उपलभ्यन्ते चूर्णितैश्चूर्णीकृतैरुत्तमांगैः शिरोभिः ॥२७॥

कथं प्रविशन्ति मुखानीत्याह—

यथा नदीनां बहवोऽबुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ॥
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभिविज्वलन्ति ॥२८॥

यथेति । यथा नदीनां स्रवन्तीनां बहवोऽनेके अंबूनां वेगा अंबुवेगास्त्वराविशेषाः समुद्रमेवाभिमुखाः प्रतिमुखा द्रवन्ति प्रविशन्ति तथा तद्वत्तवामी भीष्मादयो नरलोकवीरा मनुष्यलोके शूरा विशन्ति वक्त्राण्यभिविज्वलन्ति प्रकाशमानानि ॥२८॥

ते किमर्थं प्रविशन्ति कथं चेत्याह—

यथा प्रदीप्तं ज्वलनं पतंगा
विशन्ति नाशाय समृद्धवेगाः ॥
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः ॥२९॥

यथेति । यथा प्रदीप्तं ज्वलनमग्निं पतंगाः पक्षिणो विशन्ति नाशाय विनाशाय समृद्धवेगाः समृद्ध उद्भूतो वेगो गतिर्येषां ते समृद्धवेगाः, तथैव नाशाय विशन्ति लोकाः प्राणिनस्तवापि वक्त्राणि समृद्धवेगाः ॥२९॥

त्वं पुनः—

लेलिह्यसे ग्रसमानः समंता-
लोकान्समग्रान्वदनैर्ज्वलद्भिः ॥
तेजोभिरापूर्य जगत्समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ॥३०॥

लेलिह्यसे इति। लेलिह्यसे आस्वादयसि ग्रसमानोऽन्तः प्रवेशयन्समंतात् समंततो लोकान्समग्रान्समस्तान्वदनैर्वक्त्रैर्ज्वलद्भिर्दीप्यमानैस्तेजोभिरापूर्य संव्याप्य जगत्समग्रं सहाग्रेण समस्तमित्येतत्। किंच भासो दीप्तयस्तवोग्राः क्रूराः प्रतपन्ति प्रतापं कुर्वन्ति हे विष्णो व्यापनशील ॥३०॥

यत एवमुग्रस्वभावोऽतः—

आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ॥
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥३१॥

आख्याहीति। आख्याहि कथय मे मह्यं को भवानुग्ररूपः क्रूराकारः। नमोऽस्तु ते तुभ्यं हे देववर देवानां प्रधान, प्रसीद प्रसादं कुरु। विज्ञातुं विशेषेण ज्ञातुमिच्छामि भवन्तमाद्यमादौ भवमाद्यम्, न हि यस्मात्प्रजानामि तव त्वदीयां प्रवृत्तिं चेष्टाम् ॥३१॥

श्रीभगवानुवाच—

श्रीभगवानुवाच—

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो
लोकान्समाहर्तुमिह प्रवृत्तः ॥
ऋतेऽपि त्वा न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥३२॥

कालोऽस्मीति। कालोऽस्मि लोकक्षयकृल्लोकानां क्षयं करोतीति लोकक्षयकृत्प्रवृद्धो वृद्धिं गतः यदर्थं प्रवृद्धस्तच्छृणु, लोकान्समाहर्तुं संहर्तुमिहास्मि-

न्काले प्रवृत्तः । ऋतेऽपि विनापि त्वा त्वां न भविष्यन्ति भीष्मद्रोणकर्णप्रभृतयः सर्वे, येभ्यस्तवाशंका, येऽवस्थिताः प्रत्यनीकेषु अनीकमनीकं प्रति प्रत्यनीकेषु प्रतिपक्षभूतेष्वनीकेषु योधा योद्धारः ॥३२॥

यस्मादेवम्—

तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून्भुंक्ष्व राज्यं समृद्धम् ॥
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥३३॥

तस्मादिति । तस्मात्त्वमुत्तिष्ठ, भीष्मद्रोणप्रभृतयोऽतिरथा अजेया देवैरप्यर्जुनेन जिता इति यशो लभस्व, केवलं पुण्यैर्हि तत्प्राप्यते । जित्वा शत्रून्दुर्योधनप्रभृतीन्भुंक्ष्व राज्यं समृद्धमसपत्नमकंटकम् । मयैवैते निहता निश्चयेन हताः प्राणैर्वियोजिताः पूर्वमेव । निमित्तमात्रं भव त्वं हे सव्यसाचिन्, सव्येन वामेनापि हस्तेन शराणां क्षेपात्सव्यसाचीत्युच्यतेऽर्जुनः ॥३३॥

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यानपि योधवीरान् ॥
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥३४॥

द्रोणं चेति । द्रोणं च येषु येषु योधेष्वर्जुनस्याशंका तांस्तान्व्यपदिशति भगवान्, मया हतानिति । तत्र द्रोणभीष्मयोस्तावत्प्रसिद्धमाशंकाकारणम् । द्रोणो धनुर्वेदाचार्यो, दिव्यास्त्रसंपन्न, आत्मनश्च विशेषतो गुरुर्गरिष्ठः । भीष्मः स्वच्छंदमृत्युर्दिव्यास्त्रसंपन्नश्च परशुरामेण द्वंद्वयुद्धमगमन्न च पराजितः । तथा जयद्रथो यस्य पिता तपश्चरति मम पुत्रस्य शिरो भूमौ पातयिष्यति यस्तस्यापि शिरः पतिष्यतीति । कर्णोऽपि वासवदत्तया शक्त्या त्वमोघया संपन्नः सूर्यपुत्रः कानीनो यतोऽतस्तन्नाम्नैव निर्देशः । मया हतांस्त्वं जहि निमित्तमात्रेण । मा व्यथिष्ठास्तेभ्यो भयं मा कार्षीः । युध्यस्व, जेतासि दुर्योधनप्रभृती-

-न्रणे युद्धे सपत्नाञ्शत्रून् ॥३४॥

संजय उवाच ।

एतच्छ्रुत्वा वचनं केशवस्य
कृतांजलिर्वेपमानः किरीटी ॥
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥३५॥

एतच्छ्रुत्वेति । एतच्छ्रुत्वा वचनं केशवस्य पूर्वोक्तं कृतांजलिः सन्वेपमानः कंपमानः किरीटी नमस्कृत्वा भूयः पुनरेवाहोक्तवान्कृष्णं सगद्गदं भयाविष्टस्य दुःखाभिघातात्स्नेहाविष्टस्य च हर्षोद्भवात् अश्रुपूर्णनेत्रत्वे सति श्लेष्मणा कंठावरोधः, ततश्च वाचोऽपाटवं मंदशब्दत्वं यत्स गद्गदस्तेन सह वर्तत इति सगद्गदं वचनम्, आहेति वचनक्रियाविशेषणमेतत् । भीतभीतः पुनः पुनर्भयाविष्टचेताः सन्प्रणम्य प्रह्वो भूत्वा, आहेति व्यवहितेन संबंधः ॥ अत्रावसरे संजयवचनं साभिप्रायम् । कथं? द्रोणादिष्वर्जुनेन निहतेष्वजेयेषु चतुर्षु निराश्रयो दुर्योधनो निहत एवेति मत्वा धृतराष्ट्रो जयं प्रति निराशः सन्संधिं करिष्यति ततः शान्तिरुभयेषां भविष्यतीति । तदपि नाश्रौषीत् धृतराष्ट्रो भवितव्यवशात् ॥३५॥

अर्जुन उवाच ।

स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च ॥
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसंघाः ॥३६॥

स्थाने इति । स्थाने युक्तं, किं तत्, तव प्रकीर्त्या त्वन्माहात्म्यकीर्तनेन श्रुतेन हे हृषीकेश यज्जगत्प्रहृष्यति प्रहर्षमुपैति तत्स्थाने युक्तमित्यर्थः । अथवा विषयविशेषणं स्थाने इति, युक्तो हर्षादिविषयो भगवान् यत ईश्वरः सर्वात्मा सर्वभूतसुहृच्चेति । तथानुरज्यतेऽनुरागं चोपैति, तच्च विषये इति व्याख्येयम् ।

किंच रक्षांसि भीतानि भयाविष्टानि दिशो द्रवन्ति गच्छन्ति तच्च स्थाने विषये। सर्वे नमस्यन्ति नमस्कुर्वन्ति च सिद्धसंघाः सिद्धानां समुदायाः कपिलादीनां तच्च स्थाने ॥३६॥

भगवतो हर्षादिविषयत्वे हेतुं दर्शयति—

कस्माच्च ते न नमेरन्महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ॥
अनंत देवेश जगन्निवास
त्वमक्षरं सदसत्तत्परं यत् ॥३७॥

कस्माच्चेति । कस्माच्च हेतोस्ते तुभ्यं न नमेरन्न नमस्कुर्युर्हे महात्मन्गरीयसे गुरुतराय, यतो ब्रह्मणो हिरण्यगर्भस्याप्यादिकर्ता कारणमतस्तस्मादादिकर्त्रे, कथमेते न नमस्कुर्युः? अतो हर्षादीनां नमस्कारस्य च स्थानं त्वमहो विषय इत्यर्थः । हेऽनंत देवेश हे जगन्निवास त्वमक्षरं तत्परं यद्वेदान्तेषु श्रूयते। किं तत्? सदसदिति। सद्विद्यमानं, असच्च यत्र नास्तीति बुद्धिः, ते उपधानभूते सदसती यस्याक्षरस्य, यद्द्वारेण सदसतीत्युपचर्यते । परमार्थतस्तु सदसतोः परं तदक्षरं यदक्षरं वेदविदो वदन्ति तत्त्वमेव नान्यदित्यभिप्रायः ॥३७॥

पुनरपि स्तौति—

त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम् ॥
वेत्तासि वेद्यं च परं च धाम
त्वया ततं विश्वमनंतरूप ॥३८॥

त्वमिति । त्वमादिदेवो जगतः स्रष्टृत्वात् । पुरुषः पुरि शयनात्, पुराणश्चिरंतनः त्वमेवास्य विश्वस्य परं प्रकृष्टं निधानं निधीयतेऽस्मिञ्जगत्सर्वं महाप्रलयादाविति । किंच वेत्तासि वेदितासि सर्वस्यैव वेद्यजातस्य । यच्च वेद्यं वेदनार्हं तच्चासि । परं च धाम परमं पदं वैष्णवम् । त्वया ततं व्याप्तं विश्वं समस्तं हे अनंतरूप अंतो न विद्यते तव रूपाणाम् ॥३८॥

किंच—

वायुर्यमोऽग्निर्वरुणः शशांकः
प्रजापतिस्त्वं प्रपितामहश्च ॥
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥३९॥

वायुरिति । वायुस्त्वं यमश्चाग्निर्वरुणोऽपांपतिः शशांकश्चंद्रमाः प्रजापतिस्त्वं कश्यपादिः प्रपितामहश्च पितामहस्यापि पिता प्रपितामहो, ब्रह्मणोऽपि पितेत्यर्थः । नमो नमस्ते तुभ्यमस्तु सहस्रकृत्वः । पुनश्च भूयोऽपि नमो नमस्ते बहुशो नमस्कारक्रियाभ्यासावृत्तिगणनं कृत्वसुचोच्यते । पुनश्च, भूयोऽपीति, श्रद्धाभक्त्यतिशयादपरितोषमात्मनो दर्शयति ॥३९॥

तथा—

नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ॥
अनंतवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः ॥४०॥

नम इति । नमः पुरस्तात्पूर्वस्यां दिशि तुभ्यं, अथ पृष्ठतस्ते पृष्ठतोऽपि च ते । नमोऽस्तु ते सर्वत एव सर्वासु दिक्षु सर्वत्र स्थिताय हे सर्व अनंतवीर्यामितविक्रमोऽनंतं वीर्यमस्यामितो विक्रमोऽस्य । वीर्यं सामर्थ्यं विक्रमः पराक्रमः । वीर्यवानपि कश्चिच्छत्रुवधादिविषये न पराक्रमते, मंदपराक्रमो वा । त्वं त्वनंतवीर्योऽमितविक्रमश्चेत्यनंतवीर्यामितविक्रमः । सर्वं समस्तं जगत्समाप्नोषि सम्यगेकेनात्मना व्याप्नोषि यतस्ततस्तस्मादसि भवसि सर्वस्त्वं त्वया विनाभूतं न किंचिदस्तीत्यर्थः ॥४०॥

यतोऽहं त्वन्माहात्म्यापरिज्ञानापराद्धः अतः—

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति ॥

अजानता महिमानं तवेदं
मया प्रमादात्प्रणयेन वापि ॥४१॥

सखेति । सखा समानवया इति मत्वा ज्ञात्वा विपरीतबुद्धया प्रसभमभिभूय प्रसह्य यदुक्तं हे कृष्ण हे यादव हे सखेति चाजानताऽज्ञानिना मूढेन किमजानतेत्याह महिमानं माहात्म्यं तवेदमीश्वरस्य विश्वरूपम् । तवेदं महिमानमजानतेति वैयधिकरण्येन संबंधः । तवेममिति पाठो यद्यस्ति तदा सामानाधिकरण्यमेव । मया प्रमादाद्विक्षिप्तचित्ततया, प्रणयेन वापि, प्रणयो नाम स्नेहनिमित्तो विस्रंभः, तेनापि कारणेन यदुक्तवानस्मि ॥४१॥

यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ॥
एकोऽथवाप्यच्युत तत्समक्षं
तत्क्षामये त्वामहमप्रमेयम् ॥४२॥

यच्चेति । यच्चावहासार्थं परिहासप्रयोजनायासत्कृतः परिभूतोऽसि भवसि, क्व? विहारशय्यासनभोजनेषु विहरणं विहारः पादव्यायामः, शयनं शय्या, आसनमास्थायिका, भोजनमदन, इत्येतेषु विहारशय्यासनभोजनेषु, एकः परोक्षः सन्नसत्कृतोऽसि परिभूतोऽसि; अथवापि हेऽच्युत, तत्समक्षं, तच्छब्दः क्रियाविशेषणार्थः, प्रत्यक्षं वासत्कृतोऽसि तत्सर्वमपराधजातं क्षामये क्षमां कारये त्वामहमप्रमेयं प्रमाणातीतम् ॥४२॥

यतस्त्वम्—

पितासि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ॥
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभाव ॥४३॥

पितासीति । पितासि जनयितासि लोकस्य प्राणिजातस्य चराचरस्य स्थावरजंगमस्य । न केवलं त्वमस्य जगतः पिता, पूज्यश्च पूजार्हो, यतो

गुरुर्गरीयान्गुरुतरः । कस्माद्गुरुतरस्त्वमित्याह न च त्वत्समस्त्वत्तुल्योऽन्योऽस्ति न हीश्वरद्वयं संभवत्यनेकेश्वरत्वे व्यवहारानुपपत्तेः । त्वत्सम एव तावदन्यो न संभवति, कुत एवान्योऽभ्यधिकः स्यात् । लोकत्रयेऽपि सर्वस्मिन् । अप्रतिमप्रभाव प्रतिमीयते यया सा प्रतिमा, न विद्यते प्रतिमा यस्य तव प्रभावस्य स त्वमप्रतिमप्रभावो, हेऽप्रतिमप्रभाव निरतिशयप्रभावेत्यर्थः ॥४३॥

यत एवम्—

तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ॥
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥४४॥

तस्मादिति । तस्मात्प्रणम्य नमस्कृत्य, प्रणिधाय प्रकर्षेण नीचैर्धृत्वा कायं शरीरं, प्रसादये प्रसादं कारये त्वामहमीशमीशितारं ईड्यं स्तुत्यम् । त्वं पुनः पुत्रस्यापराधं पिता यथा क्षमते, सर्वं सखेव च सख्युरपराधं, यथा वा प्रियः प्रियाया अपराधं क्षमते, एवमर्हसि हे देव सोढुं प्रसहितुं क्षन्तुमित्यर्थः ॥४४॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ॥
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥४५॥

अदृष्टपूर्वमिति । अदृष्टपूर्वं न कदाचिदपि दृष्टपूर्वमिदं विश्वरूपं तव मयान्यैर्वा, तदहं दृष्ट्वा हृषितोऽस्मि । भयेन च प्रव्यथितं मनो मे । अतस्तदेव मे मम दर्शय हे देव रूपं यन्मत्सखम् । प्रसीद देवेश जगन्निवास जगतो निवासो जगन्निवासो हे जगन्निवास ॥४५॥

किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव ॥
तेनैव रूपेण चतुर्भुजेन

सहस्रबाहो भव विश्वमूर्ते ॥४६॥

किरीटिनमिति । किरीटिनं किरीटवन्तं तथा गदिनं गदावन्तं चक्रहस्तमिच्छामि त्वां प्रार्थये त्वां द्रष्टुमहं तथैव पूर्ववदित्यर्थः । यत एवं तस्मात् तेनैव रूपेण वसुदेवपुत्ररूपेण चतुर्भुजेन, सहस्रबाहो, वार्तमानिकेन विश्वरूपेण भव विश्वमूर्ते । उपसंहृत्य विश्वरूपं तेनैव रूपेण भवेत्यर्थः ॥४६॥

अर्जुनं भीतमुपलभ्य, उपसंहृत्य विश्वरूपं प्रियवचनेनाश्वासयन् श्रीभगवानुवाच—

श्रीभगवानुवाच ।

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ॥
तेजोमयं विश्वमनंतमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥४७॥

मयेति । मया प्रसन्नेन प्रसादो नाम त्वय्यनुग्रहबुद्धिस्तद्वता प्रसन्नेन मया तव हेऽर्जुन, इदं परं रूपं विश्वरूपं दर्शितमात्मयोगादात्मन ऐश्वर्यस्य सामर्थ्यात् । तेजोमयं तेजःप्रायं विश्वं समस्तं अनंतमंतरहितं आदौ भवमाद्यं यद्रूपं मे मम त्वदन्येन त्वत्तोऽन्येन केनाचिन्न दृष्टपूर्वम् ॥४७॥

आत्मनो मम रूपदर्शनेन कृतार्थ एव त्वं संवृत्त इति तत्स्तौति—

न वेदयज्ञाध्ययनैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः ॥
एवंरूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥४८॥

न वेदेति । न वेदयज्ञाध्ययनैः चतुर्णामपि वेदानामध्ययनैर्यथावद्यज्ञाध्ययनैश्च,—वेदाध्ययनैरेव यज्ञाध्ययनस्य सिद्धत्वात्पृथग्यज्ञाध्ययनग्रहणं यज्ञविज्ञानोपलक्षणार्थं,—तथा न दानैस्तुलापुरुषादिभिः न च क्रियाभिरग्निहोत्रादिभिः श्रौतादिभिः, नापि तपोभिरुग्रैश्चांद्रायणादिभिरुग्रैर्घोरैः, एवंरूपो यथादर्शितं विश्वरूपं

यस्य सोऽहमेवंरूपः न शक्योऽहं नृलोके मनुष्यलोके द्रष्टुं त्वदन्येन त्वत्तोऽन्येन कुरुप्रवीर ॥४८॥

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ॥
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥४९॥

मा ते व्यथेति । मा ते व्यथा मा भूत्ते भयं, मा च विमूढभावो विमूढचित्तता, दृष्ट्वोपलभ्य रूपं घोरमीदृग्यथादर्शितं ममेदम् । व्यपेतभीर्विगतभयः प्रीतमनाश्च सन्पुनर्भूयस्त्वं तदेव चतुर्भुजं रूपं शंखचक्रगदाधरं तवेष्टं रूपमिदं प्रपश्य ॥४९॥

संजय उवाच ।

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ॥
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥५०॥

इत्यर्जुनमिति । इत्येवमर्जुनं वासुदेवस्तथाभूतं वचनमुक्त्वा स्वकं वसुदेवगृहे जातं रूपं दर्शयामास दर्शितवान् भूयः पुनः । आश्वासयामास च आश्वासितवांश्च भीतमेनं भूत्वा पुनः सौम्यवपुः प्रसन्नदेहो महात्मा ॥५०॥

अर्जुन उवाच ।

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ॥
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥५१॥

दृष्ट्वेदमिति । दृष्ट्वेदं मानुषं रूपं मत्सखं प्रसन्नं तव सौम्यं जनार्दन, इदानीमधुनास्मि संवृत्तः संजातः, किं सचेताः प्रसन्नचित्तः प्रकृतिं स्वभावं गतश्चास्मि ॥५१॥

श्रीभगवानुवाच ।

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ॥
देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः ॥५२॥

सुदुर्दर्शमिति। सुदुर्दर्शं सुष्ठु दुःखेन दर्शनमस्येति सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम, देवा अप्यस्य मम रूपस्य नित्यं सर्वदा दर्शनकांक्षिणः। दर्शनेप्सवोऽपि न त्वमिव दृष्टवन्तो न द्रक्ष्यन्ति चेत्यभिप्रायः ॥५२॥

कस्मात्—

नाहं वेदैर्न तपसा न दानेन न चेज्यया ॥
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥५३॥

नाहमिति। नाहं वेदैर्ऋग्यजुःसामाथर्ववेदैश्चतुर्भिरपि, न तपसोग्रेण चांद्रायणादिना, न दानेन गोभूहिरण्यादिना, न चेज्यया यज्ञेन पूजया वा शक्य एवंविधो यथादर्शितप्रकारो द्रष्टुं दृष्टवानसि मां यथा त्वम् ॥५३॥

कथं पुनः शक्य इत्युच्यते—

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ॥
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥५४॥

भक्त्येति। भक्त्या तु किंविशिष्टयेत्याह—अनन्यया अपृथग्भूतया, भगवतोऽन्यत्र पृथङ्न कदाचिदपि या भवति सा त्वनन्या भक्तिः, सर्वैरपि करणैर्वासुदेवादन्यन्नोपलभ्यते यया सा अनन्या भक्तिस्तया भक्त्या शक्योऽहमेवंविधो विश्वरूपप्रकारो, हेऽर्जुन, ज्ञातुं शास्त्रतो, न केवलं ज्ञातुं शास्त्रतो द्रष्टुं च साक्षात्कर्तुं तत्त्वेन तत्त्वतः, प्रवेष्टुं च मोक्षं च गन्तुं परंतप ॥५४॥

अधुना सर्वस्य गीताशास्त्रस्य सारभूतोऽर्थो निःश्रेयसार्थोऽनुष्ठेयत्वेन समुच्चित्योच्यते—

मत्कर्मकृन्मत्परमो भक्तः संगवर्जितः ॥
निर्वैरः सर्वभूतेषु यः स मामेति पांडव ॥५५॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि

श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनं नामैकादशोऽध्यायः ॥११॥

मत्कर्मेति । मत्कर्मकृत् मदर्थे कर्म मत्कर्म तत्करोतीति मत्कर्मकृत्, मत्परमः करोति भृत्यः स्वामिकर्म न त्वात्मनः परमा प्रेत्य गन्तव्या गतिरिति स्वामिनं प्रतिपद्यते, अयं तु मत्कर्मकृन्मामेव परमां गतिं प्रतिपद्यते इति मत्परमः, अहं परमः परा गतिर्यस्य सोऽयं मत्परमः तथा मद्भक्तो मामेव सर्वप्रकारैः सर्वात्मना सर्वोत्साहेन भजते इति मद्भक्तः, संगवर्जितो धनपुत्रमित्रकलत्रबंधुवर्गेषु संगवर्जितः संगः प्रीतिः स्नेहस्तद्वर्जितो, निर्वैरो निर्गतवैरः सर्वभूतेषु शत्रुभावरहित आत्मनोऽत्यंतापकारप्रवृत्तेष्वपि । य ईदृशो मद्भक्तः स मामेति, अहमेव तस्य परा गतिर्नान्या गतिः काचिद्भवति । अयं तवोपदेश इष्टो मायोपदिष्टो हे पांडवेति ॥५५॥

इति श्रीत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये विश्वरूपदर्शनं नामैकादशोऽध्यायः ॥११॥

---

## अथ द्वादशोऽध्यायः ।

द्वितीयप्रभृतिषु विभूत्यंतेषु अध्यायेषु परमात्मनो ब्रह्मणोऽक्षरस्य विध्वस्तसर्वोपाधिविशेषस्योपासनमुक्तं, सर्वयोगैश्वर्यसर्वज्ञानशक्तिमत्सत्त्वोपाधेरीश्वरस्य तव चोपासनं तत्र तत्रोक्तम् । विश्वरूपाध्याये तु ऐश्वरमाद्यं समस्तजगदात्मरूपं विश्वरूपं त्वदीयं दर्शितमुपासनार्थमेव त्वया । तच्च दर्शयित्वोक्तवानसि 'मत्कर्मकृत्' [गी.११.५५] इत्यादि । अतोऽहमनयोरुभयोः पक्षयोर्विशिष्टतरबुभुत्सया त्वां पृच्छामीति अर्जुन उवाच—

अर्जुन उवाच ।

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ॥
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥१॥

एवमिति । एवमित्यतीतानंतरश्लोकेनोक्तमर्थं परामृशति 'मत्कर्मकृत्' इत्यादिना । एवं सततयुक्ता नैरंतर्येण भगवत्कर्मादौ यथोक्तेऽर्थे समाहिताः सन्तः प्रवृत्ता इत्यर्थः । ये भक्ता अनन्यशरणाः सन्तस्त्वां यथादर्शितं विश्वरूपं पर्युपासते ध्यायन्ति, ये चान्येऽपि त्यक्तसर्वैषणाः संन्यस्तसर्वकर्माणो यथाविशेषितं ब्रह्माक्षरं निरस्तसर्वोपाधित्वादव्यक्तमकरणगोचरम् । यद्धि लोके करणगोचरं तद्व्यक्तमुच्यते, अंजेर्धातोस्तत्कर्मकत्वात्; इदं त्वक्षरं तद्विपरीतं शिष्टैश्चोच्यमानैर्विशेषणैर्विशिष्टं, तद्ये चापि पर्युपासते तेषामुभयेषां मध्ये के योगवित्तमाः केऽतिशयेन योगविद इत्यर्थः ॥१॥

श्रीभगवानुवाच—

ये त्वक्षरोपासकाः सम्यग्दर्शिनो निवृत्तैषणास्ते तावत्तिष्ठन्तु, तान्प्रति यद्वक्तव्यं तदुपरिष्टाद्वक्ष्यामः । ये त्वितरे—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ॥
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥२॥

मयीति । मयि विश्वरूपे परमेश्वरे आवेश्य समाधाय मनो, ये भक्ताः सन्तो, मां सर्वयोगेश्वराणामधीश्वरं सर्वज्ञं विमुक्तरागादिक्लेशतिमिरदृष्टिं, नित्ययुक्ता अतीतानंतराध्यायान्तोक्तश्लोकार्थन्यायेन सततयुक्ताः सन्त उपासते श्रद्धया परया प्रकृष्टयोपेताः ते मे मम मता अभिप्रेता युक्ततमा इति । नैरंतर्येण हि ते मच्चित्ततया अहोरात्रमतिवाहयन्ति । अतो युक्तं तान्प्रति युक्ततमा इति वक्तुम् ॥२॥

किमितरे युक्ततमा न भवन्ति? न, किंतु तान्प्रति यद्वक्तव्यं तच्छृणु—

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ॥
सर्वत्रगमचिंत्यं च कूटस्थमचलं ध्रुवम् ॥३॥

ये त्विति । ये त्वक्षरमनिर्देश्यं, अव्यक्तत्वादशब्दगोचरमिति न निर्देष्टुं शक्यतेऽतोऽनिर्देश्यं, अव्यक्तं न केनापि प्रमाणेन व्यज्यते इत्यव्यक्तं, पर्युपासते परि समंतादुपासते । उपासनं नाम यथाशास्त्रमुपास्यस्यार्थस्य विषयीकरणेन

सामीप्यमुपगम्य तैलधारावत्समानप्रत्ययप्रवाहेण दीर्घकालं यदासनं तदुपासनमाचक्षते। अक्षरस्य विशेषणमाह उपास्यस्य सर्वत्रगं व्योमवद्व्यापि अचिंत्यं चाव्यक्तत्वादचिंत्यम्। यद्धि करणगोचरं तन्मनसापि चिंत्यं, तद्विपरीतत्वादचिंत्यमक्षरं, कूटस्थं दृश्यमानगुणं, अंतर्दोषं वस्तु कूटम्। कूटरूपं कूटसाक्ष्यमित्यादौ कूटशब्दः प्रसिद्धो लोके। तथा च अविद्याद्यनेकसंसारबीजमंतर्दोषवन्मायाकृतादिशब्दवाच्यतया "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" [श्वे.४.१०], 'मम माया दुरत्यया' [गी.७.१४] इत्यादौ प्रसिद्धं यत्तत्कूटं, तस्मिन् कूटे स्थितं कूटस्थं तदध्यक्षतया। अथवा राशिरिव स्थितं कूटस्थम्। अत एवाचलम्। यस्मादचलं तस्मात् ध्रुवं नित्यमित्यर्थः ॥३॥

सन्नियम्येंद्रियग्रामं सर्वत्र समबुद्धयः ॥
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥४॥

संनियम्येति। संनियम्य सम्यक् नियम्य उपसंहृत्य इंद्रियग्राममिंद्रियसमुदायं सर्वत्र सर्वस्मिन्काले समबुद्धयः समा तुल्या बुद्धिर्येषामिष्टानिष्टप्राप्तौ ते समबुद्धयः। ते ये एवंविधास्ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः। न तु तेषां वक्तव्यं किंचिन्मां ते प्राप्नुवन्तीति। 'ज्ञानी त्वात्मैव मे मतं' [गी.७.१८] इति ह्युक्तम्। न हि भगवत्स्वरूपाणां सतां युक्ततमत्वमयुक्ततमत्वं वा वाच्यम् ॥४॥

किंतु——

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ॥
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥५॥

क्लेशेति। क्लेशोऽधिकतरो यद्यपि मत्कर्मादिपराणां क्लेशोऽधिक एव क्लेशोऽधिकतरस्त्वक्षरात्मनां परमात्मदर्शिनां देहाभिमानपरित्यागनिमित्तः। अव्यक्तासक्तचेतसामव्यक्ते आसक्तं चेतो येषां तेऽव्यक्तासक्तचेतसस्तेषामव्यक्तासक्तचेतसाम्। अव्यक्ता हि यस्माद्या गतिरक्षरात्मिका दुःखं सा देहवद्भिर्देहाभिमानवद्भिरवाप्यतेऽतः क्लेशोऽधिकतरः। अक्षरोपासकानां

यद्वर्तनं तदुपरिष्टाद्वक्ष्यामः ॥५॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ॥
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥६॥

ये त्विति । ये तु सर्वाणि कर्माणि मयीश्वरे संन्यस्य मत्परा अहं परो येषां ते मत्पराः सन्तोऽनन्येनैवाविद्यमानमन्यदालंबनं विश्वरूपं देवमात्मानं मुक्त्वा यस्य सोऽनन्यस्तेनानन्येनैव; केन? योगेन समाधिना मां ध्यायन्तश्चिंतयन्त उपासते ॥६॥

तेषां किम्——

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ॥
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥७॥

तेषामिति । तेषां मदुपासनैकपराणामहमीश्वरः समुद्धर्ता । कुत इत्याह, मृत्युसंसारसागरात्, मृत्युयुक्तः संसारो मृत्युसंसारः स एव सागर इव सागरो दुस्तरत्वात् तस्मान्मृत्युसंसारसागरादहं तेषां समुद्धर्ता भवामि न चिरात्, किं तर्हि, क्षिप्रमेव, हे पार्थ । मय्यावेशितचेतसां मयि विश्वरूपे आवेशितं समाहितं प्रवेशितं चेतो येषां ते मय्यावेशितचेतसः तेषाम् ॥७॥

यत एवं तस्मात्——

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ॥
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥८॥

मय्येवेति । मय्येव विश्वरूपे ईश्वरे मनः संकल्पविकल्पात्मकमाधत्स्व स्थापय । मय्येवाध्यवसायं कुर्वतीं बुद्धिमाधत्स्व निवेशय । ततस्ते किं स्यादिति शृणु, निवसिष्यसि निवत्स्यसि निश्चयेन मदात्मना मयि निवासं करिष्यस्येवातः शरीरपातादूर्ध्वम् । न संशयः संशयोऽत्र न कर्तव्यः ॥८॥

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ॥
अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥९॥

अथेति । अथैवं यथावोचं तथा मयि चित्तं समाधातुं स्थापयितुं

स्थिरमचलं न शक्नोषि चेत्ततः पश्चादभ्यासयोगेन, चित्तस्यैकस्मिन्नालंबने सर्वतः समाहृत्य पुनः पुनः स्थापनमभ्यासः, तत्पूर्वको योगः समाधानलक्षण-स्तेनाभ्यासयोगेन मां विश्वरूपमिच्छ प्रार्थयस्व आप्तुं प्राप्तुं हे धनंजय ॥९॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ॥
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥१०॥

अभ्यासेऽपीति । अभ्यासेऽप्यसमर्थोऽस्यशक्तोऽसि, तर्हि मत्कर्मपरमो भव मदर्थं कर्म मत्कर्म तत्परमो मत्कर्मपरमः मत्कर्मप्रधान इत्यर्थः । अभ्या-सेन विना मदर्थमपि कर्माणि केवलं कुर्वन्सिद्धिं सत्त्वशुद्धियोगज्ञानप्राप्तिद्वारेणा-वाप्स्यसि ॥१०॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ॥
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥११॥

अथैतादिति । अथ पुनरेतदपि यदुक्तं मत्कर्मपरमत्वं, तत्कर्तुमशक्तोऽसि, मद्योगमाश्रितो मयि क्रियमाणानि कर्माणि संन्यस्य यत्करणं तेषामनुष्ठानं स मद्योगः, तमाश्रितः सन् सर्वकर्मफलत्यागं सर्वेषां कर्मणां फलसंन्यासं सर्वकर्मफलत्यागं ततोऽनंतरं कुरु यतात्मवान्संयतचित्तः सन्नित्यर्थः ॥११॥

इदानीं सर्वकर्मफलत्यागं स्तौति—

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ॥
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनंतरम् ॥१२॥

श्रेय इति । श्रेयो हि प्रशस्यतरं ज्ञानं, कस्मात् विवेकपूर्वकादभ्यासात् । तस्मादपि ज्ञानाज्ज्ञानपूर्वकं ध्यानं विशिष्यते । ज्ञानवतो ध्यानादपि कर्मफल-त्यागो, विशिष्यते इत्यनुषज्यते । एवं कर्मफलत्यागात्पूर्वविशेषणवतः शान्ति-रुपशमः सहेतुकस्य संसारस्यानंतरमेव स्यात् न तु कालांतरमपेक्षते ॥

अज्ञस्य कर्मणि प्रवृत्तस्य पूर्वोपदिष्टोपायानुष्ठानाशक्तौ सर्वकर्मणां फलत्यागः श्रेयःसाधनमुपदिष्टं न प्रथममेव । अतश्च श्रेयो हि ज्ञानमभ्यासा-दित्युत्तरोत्तरविशिष्टत्वोपदेशेन सर्वकर्मफलत्यागः स्तूयते संपन्नसाधनानुष्ठाना-

शक्तावनुष्ठेयत्वेन श्रुतत्वात् । केन साधर्म्येण स्तुतित्वं ? "यदा सर्वे प्रमुच्यन्ते" [कठ.६.१४] इति सर्वकामप्रहाणादमृतत्वमुक्तं, तत्प्रसिद्धम् । कामाश्च सर्वे श्रौतस्मार्तकर्मणां फलानि । तत्त्यागे च विदुषो ध्याननिष्ठस्यानन्तरैव शान्तिरिति सर्वकामत्यागसामान्यमज्ञकर्मफलत्यागस्यास्तीति तत्सामान्यात्सर्वकर्मफलत्यागस्तुतिरियं प्ररोचनार्था । यथागस्त्येन ब्राह्मणेन समुद्रः पीत इति इदानींतना अपि ब्राह्मणा ब्राह्मणत्वसामान्यात्स्तूयन्ते, एवं कर्मफलत्यागात्कर्मयोगस्य श्रेयःसाधनत्वमभिहितम् ॥१२॥

अत्र च आत्मेश्वरभेदमाश्रित्य विश्वरूपे ईश्वरे चेतःसमाधानलक्षणो योग उक्तः, ईश्वरार्थे कर्मानुष्ठानादि च । 'अथैतदप्यशक्तोऽसि' [गी.१२.११] इत्यज्ञानकार्यसूचनान्नाभेददर्शिनः अक्षरोपासकस्य कर्मयोग उपपद्यत इति दर्शयति । तथा कर्मयोगिनोऽक्षरोपासनानुपपत्तिं दर्शयति भगवान् 'ते प्राप्नुवन्ति मामेव [गी.१२.४] इति अक्षरोपासकानां कैवल्यप्राप्तौ स्वातंत्र्यमुक्त्वा, इतरेषां पारतंत्र्यात् ईश्वराधीनतां दर्शितवान् 'तेषामहं समुद्धर्ता' [गी.१२.७] इति । यदि हि ईश्वरस्यात्मभूतास्ते मता अभेददर्शित्वात्, अक्षररूपा एव ते इति समुद्धरणकर्मवचनं तान्प्रत्यपेशलं स्यात् । यस्माच्चार्जुनस्यात्यंतमेव हितैषी भगवांस्तस्य सम्यग्दर्शनानन्वितं कर्मयोगं भेददृष्टिमन्तमेवोपदिशति । न चात्मानमीश्वरं प्रमाणतो बुद्ध्वा कस्यचिद्गुणभावं जिगमिषति कश्चित्, विरोधात् । तस्मादक्षरोपासकानां सम्यग्दर्शननिष्ठानां संन्यासिनां त्यक्तसर्वैषणानां 'अद्वेष्टा सर्वभूतानाम्' इत्यादिधर्मपूगं साक्षादमृतत्वकारणं वक्ष्यामीति प्रवर्तते—

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ॥**
**निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥१३॥**

अद्वेष्टेति । अद्वेष्टा सर्वभूतानां न द्वेष्टा आत्मनो दुःखहेतुमपि न किंचित् द्वेष्टि, सर्वाणि भूतान्यात्मत्वेन हि पश्यति । मैत्रो मित्रभावो मैत्री मित्रतया वर्तते इति मैत्रः । करुण एव च, करुणा कृपा दुःखितेषु दया

तद्वान् करुणः, सर्वभूताभयप्रदः, संन्यासीत्यर्थः । निर्ममो ममप्रत्ययवर्जितः । निरहंकारो निर्गताहंप्रत्ययः । समदुःखसुखः समे दुःखसुखे द्वेषरागयोरप्रवर्तके यस्य स समदुःखसुखः । क्षमी क्षमावान् आक्रुष्टोऽभिहतो वा अविक्रिय एवास्ते ॥१३॥

संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ॥
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥१४॥

संतुष्ट इति । संतुष्टः सततं नित्यं देहस्थितिकारणस्य लाभेऽलाभे च उत्पन्नालंप्रत्ययः । तथा गुणवल्लाभे विपर्यये च संतुष्टः । सततं योगी समाहितचित्तः । यतात्मा संयतस्वभावः । दृढनिश्चयो दृढः स्थिरो निश्चयोऽध्यवसायो यस्यात्मतत्त्वविषये स दृढनिश्चयः । मय्यर्पितमनोबुद्धिः संकल्पविकल्पात्मकं मनः, अध्यवसायलक्षणा बुद्धिः, ते मय्येवार्पिते स्थापिते यस्य संन्यासिनः स मय्यर्पितमनोबुद्धिः । य ईदृशो मद्भक्तः स मे प्रियः । 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' [गी.७.१७] इति सप्तमेऽध्याये सूचितं तदिह प्रपंच्यते ॥१४॥

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ॥
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥१५॥

यस्मादिति । यस्मात्संन्यासिनो नोद्विजते नोद्वेगं गच्छति न संतप्यते न संक्षुभ्यति लोकः । तथा लोकान्नोद्विजते च यः । हर्षामर्षभयोद्वेगैः हर्षश्चामर्षश्च भयं चोद्वेगश्च तैर्हर्षामर्षभयोद्वेगैर्मुक्तः । हर्षः प्रियलाभे अंतःकरणस्योत्कर्षो रोमांचनाश्रुपातादिलिंगः, अमर्षोऽसहिष्णुता, भयं त्रासः, उद्वेग उद्विग्नता, तैर्मुक्तो यः स च मे प्रियः ॥१५॥

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ॥
सर्वारंभपरित्यागी यो मद्भक्तः स मे प्रियः ॥१६॥

अनपेक्ष इति । देहेंद्रियविषयसंबंधादिष्वपेक्षाविषयेष्वनपेक्षो निःस्पृहः । शुचिः बाह्येनाभ्यंतरेण च शौचेन संपन्नः । दक्षः प्रत्युत्पन्नेषु कार्येषु सद्यो

यथावत्प्रतिपत्तुं समर्थः । उदासीनो न कस्यचिन्मित्रादेः पक्षं भजते यः स उदासीनो यतिः । गतव्यथो गतभयः । सर्वारंभपरित्यागी, आरभ्यन्त इत्यारंभा इहामुत्रफलभोगार्थानि कामहेतूनि कर्माणि सर्वारंभाः तान्परित्यक्तुं शीलमस्येति सर्वारंभपरित्यागी यो मद्भक्तः स मे प्रियः ॥१६॥

किंच—

योन हृष्यति न द्वेष्टि न शोचति न कांक्षति ॥
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥१७॥

य इति । यो न हृष्यतीष्टप्राप्तौ, न द्वेष्ट्यनिष्टप्राप्तौ, न शोचति प्रियवियोगे, न चाप्राप्तं कांक्षति, शुभाशुभे कर्मणी परित्यक्तुं शीलमस्येति शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥१७॥

समः शत्रौ च मित्रे च तथा मानापमानयोः ॥
शीतोष्णसुखदुःखेषु समः संगविवर्जितः ॥१८॥

सम इति । समः शत्रौ च मित्रे च, तथा मानापमानयोः पूजापरिभवयोः, शीतोष्णसुखदुःखेषु समः, सर्वत्र च संगविवर्जितः ॥१८॥

किंच—

तुल्यनिंदास्तुतिर्मौनी संतुष्टो येन केनचित् ॥
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥१९॥

तुल्येति । तुल्यनिंदास्तुतिः निंदा च स्तुतिश्च निंदास्तुती ते तुल्ये यस्य स तुल्यनिंदास्तुतिः । मौनी मौनवान्संयतवाक् । संतुष्टो येन केनचिच्छरीरस्थितिहेतुमात्रेण । तथा चोक्तम्—"येन केनचिदाच्छन्नो येन केनचिदाशितः । यत्र क्वचन शायी स्यात्तं देवा ब्राह्मणं विदुः" [मभा.शां.२४५.१२] इति । किंच अनिकेतो निकेत आश्रयो निवासो नियतो न विद्यते यस्य सोऽनिकेतो, 'नागारे' इत्यादिस्मृत्यंतरात् । स्थिरमतिः स्थिरा परमार्थविषया मतिर्यस्य स स्थिरमतिः । भक्तिमान्मे प्रियो नरः ॥१९॥

'अद्वेष्टा सर्वभूतानां' [गी.१२.१३] इत्यादिना अक्षरोपासकानां

निवृत्तसर्वैषणानां संन्यासिनां परमार्थज्ञाननिष्ठानां धर्मजातं प्रक्रान्तमुपसंह्रियते—

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ।।२०।।

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः ।।१२।।

ये त्विति। ये तु संन्यासिनो धर्म्यामृतं धर्मादनपेतं धर्म्यं च तदमृतं च तत् अमृतत्वहेतुत्वात् इदं यथोक्तं 'अद्वेष्टा सर्वभूतानां' [गी.१२.१३] इत्यादिना पर्युपासतेऽनुतिष्ठन्ति श्रद्दधानाः सन्तो मत्परमा यथोक्तोऽहमक्षरात्मा परमो निरतिशया गतिर्येषां ते मत्परमाः, मद्भक्ताश्चोत्तमां परमार्थज्ञानलक्षणां भक्तिमाश्रिताः, तेऽतीव मे प्रियाः । 'प्रियो हि ज्ञानिनोऽत्यर्थं' [गी.७.१७] इति यत्सूचितं तद्व्याख्यायेहोपसंहृतं 'भक्तास्तेऽतीव मे प्रियाः' इति। यस्मात् धर्म्यामृतमिदं यथोक्तमनुतिष्ठन्भगवतो विष्णोः परमेश्वरस्यातीव प्रियो भवति, तस्मादिदं धर्म्यामृतं मुमुक्षुणा यत्नतोऽनुष्ठेयं विष्णोः प्रियं परं धाम जिगमिषुणा इति वाक्यार्थः ।।२०।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये भक्तियोगो नाम द्वादशोऽध्यायः ।।१२।।

---

## अथ त्रयोदशोऽध्यायः ।

सप्तमेऽध्याये सूचिते द्वे प्रकृती ईश्वरस्य । त्रिगुणात्मिकाऽष्टधा भिन्ना अपरा संसारहेतुत्वात्; परा चान्या जीवभूता क्षेत्रज्ञलक्षणेश्वरात्मिका । याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिलयहेतुत्वं प्रतिपद्यते । तत्र क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणद्वारेण तद्वतः ईश्वरस्य तत्त्वनिर्धारणार्थं क्षेत्राध्याय

आरभ्यते । अतीतानंतराध्याये च 'अद्वेष्टा सर्वभूतानां' [गी.१२.१३] इत्यादिना यावदध्यायपरिसमाप्तिः तावत् तत्त्वज्ञानिनां संन्यासिनां निष्ठा यथा ते वर्तन्ते इत्येतदुक्तम् । केन पुनस्ते तत्त्वज्ञानेन युक्ता यथोक्तधर्माचरणाद्भगवतः प्रिया भवन्तीति एवमर्थश्चायमध्याय आरभ्यते । प्रकृतिश्च त्रिगुणात्मिका सर्वकार्यकरणविषयाकारेण परिणता पुरुषस्य भोगापवर्गार्थकर्तव्यतया देहेंद्रियाद्याकारेण संहन्यते । सोऽयं संघात इदं शरीरम् । तदेतत् भगवान् उवाच—

श्रीभगवानुवाच ।

इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते ॥
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥१॥

इदमिति । इदमिति सर्वनाम्नोक्तं विशिनष्टि शरीरमिति । हे कौंतेय क्षतत्राणात्, क्षयात्, क्षरणात्, क्षेत्रवद्वा अस्मिन्कर्मफलनिष्पत्तेः क्षेत्रमिति । इतिशब्द एवंशब्दपदार्थकः । क्षेत्रमित्येवं अभिधीयते कथ्यते । एतच्छरीरं क्षेत्रं यो वेत्ति विजानाति, आपादतलमस्तकं ज्ञानेन विषयीकरोति, स्वाभाविकेन औपदेशिकेन वा वेदनेन विषयीकरोति विभागशः, तं वेदितारं प्राहुः कथयन्ति क्षेत्रज्ञ इति ।–इतिशब्द एवंशब्दपदार्थक एव पूर्ववत्–। क्षेत्रज्ञ इत्येवमाहुः । के तद्विदः तौ क्षेत्रक्षेत्रज्ञौ ये विदंन्ति ते तद्विदः ॥१॥

एवं क्षेत्रक्षेत्रज्ञौ उक्तौ । किमेतावन्मात्रेण ज्ञानेन ज्ञातव्यौ इति । नेत्युच्यते—

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥२॥

क्षेत्रज्ञमिति । क्षेत्रज्ञं यथोक्तलक्षणं चापि मां परमेश्वरमसंसारिणं विद्धि जानीहि । सर्वक्षेत्रेषु यः क्षेत्रज्ञो ब्रह्मादिस्तंबपर्यंतानेकक्षेत्रोपाधिप्रविभक्तः, तं निरस्तसर्वोपाधिभेदं सदसदादिशब्दप्रत्ययागोचरं विद्धीत्यभिप्रायः । हे भारत, यस्मात्क्षेत्रक्षेत्रज्ञेश्वरयाथात्म्यव्यतिरेकेण न ज्ञानगोचरमन्यदवशिष्टमस्ति, तस्मा-

रक्षेत्रक्षेत्रज्ञयोर्ज्ञेयभूतयोर्यज्ज्ञानं क्षेत्रक्षेत्रज्ञौ येन ज्ञानेन विषयीक्रियेते तज्ज्ञानं सम्यग्ज्ञानमिति मतमभिप्रायो ममेश्वरस्य विष्णोः ॥

ननु सर्वक्षेत्रेष्वेक एवेश्वरो नान्यस्तद्व्यतिरिक्तो भोक्ता विद्यते चेत्, तत ईश्वरस्य संसारित्वं प्राप्तम्, ईश्वरव्यतिरेकेण वा संसारिणोऽन्यस्याभावात्संसाराभावप्रसंगः । तच्चोभयमनिष्टं, बंधमोक्षतद्धेतुशास्त्रानर्थक्यप्रसंगात्, प्रत्यक्षादिप्रमाणविरोधाच्च । प्रत्यक्षेण तावत्सुखदुःखतद्धेतुलक्षणः संसार उपलभ्यते, जगद्वैचित्र्योपलब्धेश्च धर्माधर्मनिमित्तः संसारोऽनुमीयते । सर्वमेतदनुपपन्नमात्मेश्वरैकत्वे ॥

न ज्ञानाज्ञानयोरन्यत्वेनोपपत्तेः । "दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता" [कठ.२.४] । तथा च तयोर्विद्याविद्याविषययोः फलभेदोऽपि विरुद्धो निर्दिष्टः "श्रेयश्च प्रेयश्च" [कठ.२.२] इति । विद्याविषयः श्रेयः, प्रेयस्त्वविद्याकार्यमिति । तथा च व्यासः—"द्वाविमावथ पंथानौ" [मभा.शां.२४०.६] इत्यादि, "इमौ द्वावेव पंथानौ" इत्यादि च । इह च द्वे निष्ठे उक्ते । अविद्या च सह कार्येण विद्यया हातव्येति श्रुतिस्मृतिन्यायेभ्योऽवगम्यते । श्रुतयस्तावत्—"इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः" [केन.२.५], "तमेवं विद्वानमृत इह भवति, नान्यः पंथा विद्यतेऽयनाय" [श्वे.३.८], "विद्वान्न बिभेति कुतश्चन" [तै.२.४] । अविदुषस्तु—"अथ तस्य भयं भवति," [तै.२.७], "अविद्यायामंतरे वर्तमानाः" [कठ.२.५], "ब्रह्म वेद ब्रह्मैव भवति" [मुंड.३.२.९], "अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्"[बृ.१.४.१०], आत्मविद्. "स इदं सर्वं भवति" [बृ.१.४.१०], "यदा चर्मवत्" [श्वे.६.२०], इत्याद्याः सहस्रशः । स्मृतयश्च—'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जंतवः' [गी.५.१५], 'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः' [गी.५.१९], 'समं पश्यन्हि सर्वत्र' [गी.१३.२८] इत्याद्याः । न्यायतश्च—"सर्पान्कुशाग्राणि तथोदपानं ज्ञात्वा मनुष्याः परिवर्जयन्ति । अज्ञानतस्तत्र पतन्ति केचि-

ज्ज्ञाने फलं पश्य यथाविशिष्टम्” [मभा.शां.२०१.१६] । तथा च देहादिष्वात्मबुद्धिराविद्वान्रागद्वेषादिप्रयुक्तो धर्माधर्मानुष्ठानकृज्जायते म्रियते चेत्यवगम्यते, देहादिव्यतिरिक्तात्मदर्शिनो रागद्वेषादिप्रहाणापेक्षधर्माधर्मप्रवृत्त्युपशमान्मुच्यन्त इति न केनचित्प्रत्याख्यातुं शक्यं न्यायतः। तत्रैवं सति क्षेत्रज्ञस्येश्वरस्यैव सतोऽविद्याकृतोपाधिभेदतः संसारित्वमिव भवति, यथा देहाद्यात्मत्वमात्मनः। सर्वजंतूनां हि प्रसिद्धो देहादिष्वनात्मस्वात्मभावो निश्चितोऽविद्याकृतः, यथा स्थाणौ पुरुषनिश्चयः। न चैतावता पुरुषधर्मः स्थाणोर्भवति स्थाणुधर्मो वा पुरुषस्य। तथा न चैतन्यधर्मो देहस्य देहधर्मो वा चेतनस्य। सुखदुःखमोहात्मकत्वादिरात्मनो न युक्तोऽविद्याकृतत्वाविशेषाज्जरामृत्युवत्। नातुल्यत्वादिति चेत्, स्थाणुपुरुषौ ज्ञेयावेव सन्तौ ज्ञात्रा अन्योन्यस्मिन्नध्यस्तावविद्यया, देहात्मनोस्तु ज्ञेयज्ञात्रोरेवेतरेतराध्यास, इति न समो दृष्टान्तः। अतो देहधर्मो ज्ञेयोऽपि ज्ञातुरात्मनो भवतीति चेत्, न अचैतन्यादिप्रसंगात्। यदि हि ज्ञेयस्य देहादेः क्षेत्रस्य धर्माः सुखदुःखमोहेच्छादयो ज्ञातुर्भवन्ति तर्हि ज्ञेयस्य क्षेत्रस्य धर्माः केचनात्मनात्मनो भवन्त्यविद्याध्यारोपिता जरामरणादयस्तु न भवन्तीति विशेषहेतुर्वक्तव्यः। न भवन्तीत्यस्त्यनुमानमविद्याध्यारोपितत्वाज्जरादिवदिति, हेयत्वात्, उपादेयत्वाच्चेत्यादि। तत्रैवं सति कर्तृत्वभोक्तृत्वलक्षणः संसारो ज्ञेयस्थो ज्ञातर्यविद्यया अध्यारोपित इति न तेन ज्ञातुः किंचित् दुष्यति। यथा बालैरध्यारोपितेनाकाशस्य तलमलवत्त्वादिना ॥

एवं च सति सर्वक्षेत्रेष्वपि सतो भगवतः क्षेत्रज्ञस्येश्वरस्य संसारित्वगंधमात्रमपि नाशंक्यम्। नहि क्वचिदपि लोके अविद्याध्यस्तेन धर्मेण कस्यचिदुपकारोऽपकारो वा दृष्टः ॥

यत्तूक्तं—न समो दृष्टान्त इति, तदसत्। कथम्। अविद्याध्यासमात्रं हि दृष्टान्तदार्ष्टान्तिकयोः साधर्म्यं विवक्षितम्। तन्न व्यभिचरति। यत्तु ज्ञातरि व्यभिचरतीति मन्यसे तस्याप्यनैकान्तिकत्वं दर्शितं जरादिभिः ॥

अविद्यावत्त्वात्क्षेत्रज्ञस्य संसारित्वमिति चेत् न, अविद्यायास्तामसत्वात्। तामसो हि प्रत्यय आवरणात्मकत्वादविद्या विपरीतग्राहकः, संशयोपस्थापको वा, अग्रहणात्मको वा। विवेकप्रकाशभावे तदभावात्, तामसे चावरणात्मके तिमिरादिदोषे सत्यग्रहणादेरविद्यात्रयस्योपलब्धेः ॥

अत्राह—एवं तर्हि ज्ञातृधर्मोऽविद्या। न, करणे चक्षुषि तैमिरिकत्वादिदोषोपलब्धेः। यत्तु मन्यसे ज्ञातृधर्मोऽविद्या तदेव चाविद्याधर्मवत्त्वं क्षेत्रज्ञस्य संसारित्वम्। तत्र यदुक्तं ईश्वर एव क्षेत्रज्ञो न संसारीत्येतदयुक्तमिति, तन्न; यथा करणे चक्षुषि विपरीतग्राहकादिदोषस्य दर्शनात्। न विपरीतादिग्रहणं तन्निमित्तो वा तैमिरिकत्वादिदोषो ग्रहीतुः, चक्षुषः संस्कारेण तिमिरेऽपनीते ग्रहीतुरदर्शनान्न ग्रहीतुर्धर्मो यथा, तथा सर्वत्रैवाग्रहणविपरीतसंशयप्रत्ययास्तन्निमित्ताः करणस्यैव कस्यचिद्भवितुमर्हन्ति, न ज्ञातुः क्षेत्रज्ञस्य। संवेद्यत्वाच्च तेषां प्रदीपप्रकाशवन्न ज्ञातृधर्मत्वम्। संवेद्यत्वादेव स्वात्मव्यतिरिक्तसंवेद्यत्वम्। सर्वकरणवियोगे च कैवल्ये सर्ववादिभिरविद्यादिदोषवत्त्वानभ्युपगमात्। आत्मनो यदि क्षेत्रज्ञस्याग्न्युष्णवत्स्वो धर्मस्ततो न कदाचिदपि तेन वियोगः स्यात्। अविक्रियस्य च व्योमवत्सर्वगतस्यामूर्तस्यात्मनः केनचित्संयोगवियोगानुपपत्तेः, सिद्धं क्षेत्रज्ञस्य नित्यमेवेश्वरत्वम्। 'अनादित्वान्निर्गुणत्वात्' [गी.१३.३१] इत्यादीश्वरवचनाच्च ॥

ननु एवं सति संसारसंसारित्वाभावे शास्त्रानर्थक्यादिदोषः स्यादिति चेत्, न; सर्वैरभ्युपगतत्वात्। सर्वैर्ह्यात्मवादिभिरभ्युपगतो दोषो नैकेन परिहर्तव्यो भवति। कथमभ्युपगत इति, मुक्तात्मनां हि संसारसंसारित्वव्यवहाराभावः सर्वैरेवात्मवादिभिरिष्यते। न च तेषां शास्त्रानर्थक्यादिदोषप्राप्तिरभ्युपगता। तथा नः क्षेत्रज्ञानामीश्वरैकत्वे सति शास्त्रानर्थक्यं भवतु। अविद्याविषये चार्थवत्त्वम्। यथा द्वैतिनां सर्वेषां बंधावस्थायामेव शास्त्राद्यर्थवत्त्वं, न मुक्तावस्थायाम्, एवम् ॥

ननु आत्मनो बंधमुक्तावस्थे परमार्थत एव वस्तुभूते द्वैतिनां सर्वेषाम्।

अतो हेयोपादेयतत्साधनसद्भावे शास्त्राद्यर्थवत्त्वं स्यात् । अद्वैतिनां पुनः द्वैतस्यापरमार्थत्वात् विद्याकृतत्वाद्बंधावस्थायाश्चात्मनोऽपरमार्थत्वे निर्विषयत्वात् शास्त्राद्यानर्थक्यमिति चेत् न, आत्मनोऽवस्थाभेदानुपपत्तेः । यदि तावदात्मनो बंधमुक्तावस्थे युगपत्स्यातां क्रमेण वा । युगपत्तावद्विरोधान्न संभवतः स्थितिगती इवैकस्मिन् । क्रमभावित्वे च निर्निमित्तत्वेऽनिर्मोक्षप्रसंगः, अन्यनिमित्तत्वे च स्वतोऽभावादपरमार्थत्वप्रसंगः । तथा च सत्यभ्युपगमहानिः । किंच बंधमुक्तावस्थयोः पौर्वापर्यनिरूपणायां बंधावस्था पूर्वं प्रकल्प्या अनादिमत्यन्तवती च; तच्च प्रमाणविरुद्धम् । तथा मोक्षावस्था आदिमती अनंता च प्रमाणविरुद्धैवाभ्युपगम्यते । न चावस्थावतोऽवस्थान्तरं गच्छतो नित्यत्वमुपपादयितुं शक्यम् । अथ अनित्यत्वदोषपरिहाराय बंधमुक्तावस्थाभेदो न कल्प्यते, अतो द्वैतिनामपि शास्त्रानर्थक्यादिदोषोऽपरिहार्य एव; इति समानत्वान्नाद्वैतवादिना परिहर्तव्यो दोषः ॥

न च शास्त्रानर्थक्यं, यथाप्रसिद्धाविद्वत्पुरुषविषयत्वाच्छास्त्रस्य । अविदुषां हि फलहेत्वोरनात्मनोरात्मदर्शनं न विदुषां, विदुषां हि फलहेतुभ्यामात्मनोऽन्यत्वदर्शने सति तयोरहमित्यात्मदर्शनानुपपत्तेः । न ह्यत्यंतमूढ उन्मत्तादिरपि जलाग्न्योश्छायाप्रकाशयोर्वैकात्म्यं पश्यति, किमुत विवेकी । तस्मान्न विधिप्रतिषेधशास्त्रं तावत्फलहेतुभ्यामात्मनोऽन्यत्वदर्शिनो भवति । न हि देवदत्त त्वमिदं कुरु इति कस्मिंश्चित्कर्मणि नियुक्ते, विष्णुमित्रः अहं नियुक्त इति तत्रस्थो नियोगं शृण्वन्नपि प्रतिपद्यते । नियोगविषयाविवेकाग्रहणात्तु उपपद्यते प्रतिपत्तिः तथा फलहेत्वोरपि ॥

ननु प्राकृतसंबंधापेक्षया युक्तैव प्रतिपत्तिः शास्त्रार्थविषया फलहेतुभ्यामन्यात्मत्वदर्शनेऽपि सति इष्टफलहेतौ प्रवर्तितोऽस्मि, अनिष्टफलहेतोश्च निवर्तितोऽस्मीति, यथा पितृपुत्रादीनामितरेतरात्मान्यत्वदर्शने सत्यपि अन्योन्यनियोगप्रतिषेधार्थप्रतिपत्तिः । न, व्यतिरिक्तात्मदर्शनप्रतिपत्तेः प्रागेव फलहेत्वोरात्माभिमानस्य सिद्धत्वात् । प्रतिपन्ननियोगप्रतिषेधार्थो हि फलहेतुभ्या-

मात्मनोऽन्यत्वं प्रतिपद्यते, न पूर्वम्। तस्मात् विधिप्रतिषेधशास्त्रं अविद्वद्विषयमिति सिद्धम् ॥

ननु स्वर्गकामो यजेत, कलंजं न भक्षयेत् इत्यादौ आत्मव्यतिरेकदर्शिनामप्रवृत्तौ, केवलदेहाद्यात्मदृष्टीनां च। अतः कर्तुरभावाच्छास्त्रानर्थक्यमिति चेत् न, यथाप्रसिद्धित एव प्रवृत्तिनिवृत्त्युपपत्तेः। ईश्वरक्षेत्रज्ञैकत्वदर्शी ब्रह्मवित्तावन्न प्रवर्तते। तथा नैरात्म्यवाद्यपि नास्ति परलोक इति न प्रवर्तते। यथाप्रसिद्धितस्तु विधिप्रतिषेधशास्त्रश्रवणान्यथानुपपत्त्या अनुमितात्मास्तित्वः आत्मविशेषानभिज्ञः कर्मफलसंजाततृष्णः श्रद्दधानतया च प्रवर्तते, इति सर्वेषां नः प्रत्यक्षम्। अतो न शास्त्रानर्थक्यम् ॥

विवेकिनामप्रवृत्तिदर्शनात् तदनुगामिनामप्रवृत्तौ शास्त्रानर्थक्यमिति चेत् न, कस्यचिदेव विवेकोपपत्तेः। अनेकेषु हि प्राणिषु कश्चिदेव विवेकी स्यात्, यथेदानीम्। न च विवेकिनमनुवर्तन्ते मूढा, रागादिदोषतंत्रत्वात्प्रवृत्तेः, अभिचरणादौ च प्रवृत्तिदर्शनात्, स्वाभाव्याच्च प्रवृत्तेः 'स्वभावस्तु प्रवर्तते' [गी.५.१४] इति ह्युक्तम् ॥

तस्मात् अविद्यामात्रं संसारो यथादृष्टविषय एव। न क्षेत्रज्ञस्य केवलस्य अविद्या तत्कार्यं च। न च मिथ्याज्ञानं परमार्थवस्तु दूषयितुं समर्थम्। न हि ऊषरदेशं स्नेहेन पंकीकर्तुं शक्नोति मरीच्युदकम्। तथा अविद्या क्षेत्रज्ञस्य न किंचित्कर्तुं शक्नोति। अतश्चेदमुक्तं—'क्षेत्रज्ञं चापि मां विद्धि' [गी.१३.२] 'अज्ञानेनावृतं ज्ञानम्' [गी.५.१५] इति च ॥

अथ किमिदं संसारिणामिव अहमेवं, ममैवेदं, इति पंडितानामपि। शृणु, इदं तत्पांडित्यं यत्क्षेत्रे एवात्मदर्शनम्। यदि पुनः क्षेत्रज्ञमविक्रियं पश्येयुः ततो न भोगं कर्म वा आकांक्षेयुः मम स्यात् इति। विक्रियैव भोगकर्मणी। अथैवं सति, फलार्थित्वादविद्वान्प्रवर्तते। विदुषः पुनरविक्रियात्मदर्शिनः फलार्थित्वाभावात्प्रवृत्त्यनुपपत्तौ कार्यकरणसंघातव्यापारोपरमे निवृत्तिरुपचर्यते ॥

इदं चान्यत्पांडित्यं केषांचिदस्तु-क्षेत्रज्ञ ईश्वर एव । क्षेत्रं चान्यत्क्षेत्रज्ञस्यैव विषयः । अहं तु संसारी सुखी दुःखी च । संसारोपरमश्च मम कर्तव्यः क्षेत्रक्षेत्रज्ञविज्ञानेन, ध्यानेन चेश्वरं क्षेत्रज्ञं साक्षात्कृत्वा तत्स्वरूपावस्थानेनेति । यश्चैवं बुध्यते, यश्च बोधयति, नासौ क्षेत्रज्ञ इति । एवं मन्वानो यः स पंडितापसदः, संसारमोक्षयोः शास्त्रस्य चार्थवत्त्वं करोमीति, आत्महा स्वयं मूढोऽन्यांश्च व्यामोहयति शास्त्रार्थसंप्रदायरहितत्वात् श्रुतहानिमश्रुतकल्पनां च कुर्वन् । तस्मादसंप्रदायवित्सर्वशास्त्रविदपि मूर्खवदेवोपेक्षणीयः ॥

यत्तूक्तं– ईश्वरस्य क्षेत्रज्ञैकत्वे संसारित्वं प्राप्नोति क्षेत्रज्ञानां चेश्वरैकत्वे संसारिणोऽभावात्संसाराभावप्रसंग– इति । एतौ दोषौ प्रत्युक्तौ– विद्याविद्ययोर्वैलक्षण्याभ्युपगमात्– इति । कथम् । अविद्यापरिकल्पितदोषेण तद्विषयं वस्तु पारमार्थिकं न दुष्यतीति । तथा च दृष्टान्तो दर्शितो– मरीच्यंभसा ऊषरदेशो न पंकीक्रियते इति । संसारिणोऽभावात्संसाराभावप्रसंगदोषोऽपि संसारसंसारिणोरविद्याकल्पितत्वोपपत्त्या प्रत्युक्तः ॥

ननु अविद्यावत्त्वमेव क्षेत्रज्ञस्य संसारित्वदोषः । तत्कृतं च दुःखित्वादि प्रत्यक्षमुपलभ्यते इति चेत्, न, ज्ञेयस्य क्षेत्रधर्मत्वात्, ज्ञातुः क्षेत्रज्ञस्य तत्कृतदोषानुपपत्तेः । यावत्किंचित्क्षेत्रज्ञस्य दोषजातमविद्यमानमासंजयसि, तस्य ज्ञेयत्वोपपत्तेः क्षेत्रधर्मत्वमेव, न क्षेत्रज्ञधर्मत्वम् । न च तेन क्षेत्रज्ञो दुष्यति, ज्ञेयेन ज्ञातुः संसर्गानुपपत्तेः । यदि हि संसर्गः स्यात्, ज्ञेयत्वमेव नोपपद्येत । यद्यात्मनो धर्मोऽविद्यावत्त्वं दुःखितत्वादि च कथं भोः प्रत्यक्षमुपलभ्यते, कथं वा क्षेत्रज्ञधर्मः । 'ज्ञेयं च सर्वं क्षेत्रं ज्ञातैव क्षेत्रज्ञ' इत्यवधारिते, 'अविद्यादुःखितत्वादेः क्षेत्रज्ञविशेषणत्वं क्षेत्रज्ञधर्मत्वं तस्य च प्रत्यक्षोपलभ्यत्वं' इति विरुद्धमुच्यतेऽविद्यामात्रावष्टंभात्केवलम् ॥

अत्राह सा अविद्या कस्येति । यस्य दृश्यते तस्यैव । कस्य दृश्यते इति । अत्रोच्यते– अविद्या कस्य दृश्यते इति प्रश्नो निरर्थकः । कथं, दृश्यते चेदविद्या, तद्वन्तमपि पश्यसि । न च तद्वत्युपलभ्यमाने

सा कस्येति प्रश्नो युक्तः। न हि गोमत्युपलभ्यमाने गावः कस्येति प्रश्नोऽर्थवान्भवेत्। ननु विषमो दृष्टान्तः। गवां तद्वतश्च प्रत्यक्षत्वात्संबंधोऽपि प्रत्यक्ष इति प्रश्नो निरर्थकः। न तथा अविद्या तद्वांश्च प्रत्यक्षौ, यतः प्रश्नो निरर्थकः स्यात्। अप्रत्यक्षेणाविद्यावता अविद्यासंबंधे ज्ञाते, किं तव स्यात्। अविद्याया अनर्थहेतुत्वात्परिहर्तव्या स्यात्। यस्याविद्या स तां परिहरिष्यति। ननु ममैवाविद्या। जानासि तर्ह्यविद्यां तद्वन्तं चात्मानम्। जानामि, न तु प्रत्यक्षेण। अनुमानेन चेज्जानासि, कथं संबंधग्रहणम्। न हि तव ज्ञातुर्ज्ञेयभूतया अविद्यया तत्काले संबंधो ग्रहीतुं शक्यते, अविद्याया विषयत्वेनैव ज्ञातुरुपयुक्तत्वात्। न च ज्ञातुरविद्यायाश्च संबंधस्य यो ग्रहीता, ज्ञानं चान्यत्तद्विषयं संभवति अनवस्थाप्राप्तेः। यदि ज्ञात्रापि ज्ञेयसंबंधो ज्ञायते, अन्यो ज्ञाता कल्प्यः स्यात्, तस्याप्यन्यः, तस्याप्यन्य इत्यनवस्था अपरिहार्या। यदि पुनरविद्या ज्ञेया अन्यद्वा ज्ञेयं ज्ञेयमेव। तथा ज्ञाता अपि ज्ञातैव, न ज्ञेयं भवति। यदा चैवं, अविद्यादुःखितत्वाद्यैर्न ज्ञातुः क्षेत्रज्ञस्य किंचित् दुष्यति।

न तु अयमेव दोषो, यद्दोषवत्क्षेत्रविज्ञातृत्वम्। नच विज्ञानस्वरूपस्यैवाविक्रियस्य विज्ञातृत्वोपचारात्। यथोष्णतामात्रेणाग्नेः तप्तिक्रियोपचारस्तद्वत्। यथात्र भगवता क्रियाकारकफलात्मत्वाभाव आत्मनि स्वत एव दर्शितो अविद्याध्यारोपितैरेव क्रियाकारकादिः आत्मन्युपचर्यते, तथा तत्र तत्र 'य एनं वेत्ति हन्तारं' [गी.२.१९], 'प्रकृतेः, क्रियमाणानि गुणैः कर्माणि सर्वशः' [गी.३.२७], 'नादत्ते कस्यचित्पापम्' [गी.५.१५] इत्यादिप्रकरणेषु दर्शितः। तथैव च व्याख्यातमस्माभिः। उत्तरेषु च प्रकरणेषु दर्शयिष्यामः॥

हन्त तर्हि आत्मनि क्रियाकारकफलात्मतायाः स्वतोऽभावे अविद्यया चाध्यारोपितत्वे, कर्माण्यविद्वत्कर्तव्यान्येव, न विदुषामिति प्राप्तम्। सत्यमेवं प्राप्तम्। एतदेव च 'न हि देहभृता शक्यं' [गी.१८.११], इत्यत्र दर्श-

यिष्यामः । सर्वशास्त्रार्थोपसंहारप्रकरणे च 'समासेनैव कौन्तेय निष्ठा ज्ञानस्य यापरा' [गी. १८.५०], इत्यत्र विशेषतो दर्शयिष्यामः । अलमिह बहुप्रपंचेन इत्युपसंह्रियते ॥२॥

'इदं शरीरं' इत्यादिश्लोकोपदिष्टस्य क्षेत्राध्यायार्थस्य संग्रहश्लोकोऽयमुपन्यस्यते 'तत्क्षेत्रं यच्च' इत्यादि, व्याचिख्यासितस्य ह्यर्थस्य संग्रहोपन्यासो न्याय्य इति—

तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ॥
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥३॥

तदिति । यन्निर्दिष्टं इदं शरीरं इति तत्तच्छब्देन परामृशति । यच्चेदं निर्दिष्टं क्षेत्रं तद्यादृग्यादृशं स्वकीयैर्धर्मैः । चशब्दः समुच्चयार्थः । यद्विकारि यो विकारो यस्य तद्यद्विकारि, यतो यस्माच्च यत्, कार्यमुत्पद्यते इति वाक्यशेषः । स च यः क्षेत्रज्ञो निर्दिष्टः स यत्प्रभावो ये प्रभावा उपाधिकृताः शक्तयो यस्य स यत्प्रभावश्च । तत्क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं यथाविशेषितं समासेन संक्षेपेण मे मम वाक्यतः शृणु, श्रुत्वा अवधारयेत्यर्थः ॥३॥

तत्क्षेत्रक्षेत्रज्ञयाथात्म्यं विवक्षितं स्तौति श्रोतृबुद्धिप्ररोचनार्थम्—

ऋषिभिर्बहुधा गीतं छंदोभिर्विविधैः पृथक् ॥
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥४॥

ऋषिभिरिति । ऋषिभिर्वसिष्ठादिभिर्बहुधा बहुप्रकारं गीतं कथितं, छंदोभिश्छंदांसि ऋगादीनि तैश्छंदोभिर्विविधैर्नानाप्रकारैः पृथग्विवेकतो गीतम् । किंच, ब्रह्मसूत्रपदैश्च, ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि तैः पद्यते गम्यते ज्ञायते ब्रह्मेति तानि पदान्युच्यन्ते । तैरेव च क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं गीतं इत्यनुवर्तते । "आत्मेत्येवोपासीत" इत्यादिभिः ब्रह्मसूत्रपदैः आत्मा ज्ञायते । हेतुमद्भिर्युक्तियुक्तैर्विनिश्चितैः निःसंशयरूपैर्निश्चितप्रत्ययोत्पादकैरित्यर्थः ॥४॥

स्तुत्या अभिमुखीभूतायार्जुनाय आह भगवान्—

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ॥
इंद्रियाणि दशैकं च पंच चेंद्रियगोचराः ॥५॥

महाभूतानीति । महाभूतानि महान्ति च तानि सर्वविकारव्यापकत्वात् भूतानि च सूक्ष्माणि । स्थूलानि तु इंद्रियगोचरशब्देनाभिधायिष्यन्ते । अहंकारो महाभूतकारणमहंप्रत्ययलक्षणः । अहंकारकारणं बुद्धिरध्यवसायलक्षणा । तत्कारणमव्यक्तमेव च, न व्यक्तमव्यक्तं अव्याकृतमीश्वरशक्तिः 'मम माया दुरत्यया' [गी.७.१४], इत्युक्तम् । एवशब्दः प्रकृत्यवधारणार्थः । एतावत्येवाष्टधा भिन्ना प्रकृतिः । चशब्दो भेदसमुच्चयार्थः । इंद्रियाणि दश, श्रोत्रादीनि पंच बुद्ध्युत्पादकत्वात् बुद्धींद्रियाणि, वाक्पाण्यादीनि पंच कर्मनिर्वर्तकत्वात्कर्मेंद्रियाणि, तानि दश । एकं च, किं तत् मन एकादशं संकल्पाद्यात्मकम् । पंच च इंद्रियगोचराः शब्दादयो विषयाः । तान्येतानि सांख्याश्चतुर्विंशतितत्त्वान्याचक्षते ॥५॥

अथेदानीमात्मगुणा इति यानाचक्षते वैशेषिकास्तेऽपि क्षेत्रधर्मा एव न तु क्षेत्रज्ञस्येत्याह भगवान्—

इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ॥
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥६॥

इच्छेति । इच्छा, यज्जातीयं सुखहेतुमर्थमुपलब्धवान्पूर्वं पुनस्तज्जातीयमुपलभमानस्तमादातुमिच्छति सुखहेतुरिति, सेयमिच्छा अंतःकरणधर्मो ज्ञेयत्वात्क्षेत्रम् । तथा द्वेषो यज्जातीयमर्थं दुःखहेतुत्वेनानुभूतवान्पुनस्तज्जातीयमर्थमुपलभमानस्तं द्वेष्टि, सोऽयं द्वेषो ज्ञेयत्वात्क्षेत्रमेव । तथा सुखमनुकूलं प्रसन्नसत्त्वात्मकं ज्ञेयत्वात्क्षेत्रमेव । दुःखं प्रतिकूलात्मकं, ज्ञेयत्वात्तदपि क्षेत्रम् । संघातो देहेंद्रियाणां संहतिः । तस्यामभिव्यक्ता अन्तःकरणवृत्तिः, तप्त इव लोहपिंडेऽग्निः आत्मचैतन्याभासरसविद्धा चेतना, सा च क्षेत्रं ज्ञेयत्वात् । धृतिर्यया अवसादप्राप्तानि देहेंद्रियाणि ध्रियन्ते, सा च ज्ञेयत्वात्क्षेत्रम् । सर्वान्तःकरणधर्मोपलक्षणार्थमिच्छादिग्रहणम् । यत उक्तं उपसंहरति—एतत्क्षेत्रं समा-

सेन सविकारं सह विकारेण महदादिनोदाहृतमुक्तम् ॥६॥

यस्य क्षेत्रभेदजातस्य संहतिः 'इदं शरीरं क्षेत्रं' इत्युक्तं तत्क्षेत्रं व्याख्यातं महाभूतादिभेदभिन्नं धृत्यन्तम् । क्षेत्रज्ञो वक्ष्यमाणविशेषणो यस्य सप्रभावस्य क्षेत्रज्ञस्य परिज्ञानादमृतत्वं भवति तं 'ज्ञेयं यत्तत्प्रवक्ष्यामि' [गी. १३.१२] इत्यादिना सविशेषणं स्वयमेव वक्ष्यति भगवान् । अधुना तु तज्ज्ञानसाधनगणममानित्वादिलक्षणं, यस्मिन्सति तज्ज्ञेयविज्ञाने योग्योऽधिकृतो भवति, यत्परः संन्यासी ज्ञाननिष्ठ उच्यते, तममानित्वादिगणं ज्ञानसाधनत्वाज्ज्ञानशब्दवाच्यं विदधाति भगवान्—

अमानित्वमदंभित्वमहिंसा क्षान्तिरार्जवम् ॥
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥७॥

अमानित्वमिति । अमानित्वं मानिनो भावो मानित्वमात्मनः श्लाघनं, तदभावोऽमानित्वम् । अदंभित्वं, स्वधर्मप्रकटीकरणं दंभित्वं, तदभावोऽदंभित्वम् । अहिंसा अहिंसनं प्राणिनामपीडनम् । क्षान्तिः परापराधप्राप्तावविक्रिया । आर्जवमृजुभावोऽवक्रत्वम् । आचार्योपासनं मोक्षसाधनोपदेष्टुराचार्यस्य शुश्रूषादिप्रयोगेण सेवनम् । शौचं कायमलानां मृज्जलाभ्यां प्रक्षालनम्, अंतश्च मनसः प्रतिपक्षभावनया रागादिमलानामपनयनं शौचम् । स्थैर्यं स्थिरभावो, मोक्षमार्ग एव कृताध्यवसायत्वम् । आत्मविनिग्रह आत्मनोऽपकारकस्य आत्मशब्दवाच्यस्य कार्यकरणसंघातस्य विनिग्रहः स्वभावेन सर्वतः प्रवृत्तस्य सन्मार्गे एव निरोध आत्मविनिग्रहः ॥७॥

किंच—

इंद्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥८॥

इंद्रियार्थेष्विति । इंद्रियार्थेषु शब्दादिषु दृष्टादृष्टेषु भोगेषु विरागभावो वैराग्यम्, अनहंकारोऽहंकारभाव एव च । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं, जन्म च मृत्युश्च जरा च व्याधयश्च दुःखानि च तेषु जन्मादिदुः-

खान्तेषु प्रत्येकं दोषानुदर्शनम् । जन्मनि गर्भवासयोनिद्वारा निःसरणं दोषः तस्यानुदर्शनमालोचनम् । तथा मृत्यौ दोषानुदर्शनम् । तथा जरायां प्रज्ञाशक्तितेजोनिरोधदोषानुदर्शनं परिभूतता चेति । तथा व्याधिषु शिरोरोगादिषु दोषानुदर्शनम् । तथा दुःखेष्वध्यात्माधिभूताधिदैवनिमित्तेषु । अथवा दुःखान्येव दोषो दुःखदोषस्तस्य जन्मादिषु पूर्ववदनुदर्शनम्—दुःखं जन्म, दुःखं मृत्युः, दुःखं जरा, दुःखं व्याधयः । दुःखनिमित्तत्वाज्जन्मादयो दुःखं, न पुनः स्वरूपेणैव दुःखमिति । एवं जन्मादिषु दुःखदोषानुदर्शनात् देहेंद्रियविषयभोगेषु वैराग्यमुपजायते । ततः प्रत्यगात्मनि प्रवृत्तिः करणानामात्मदर्शनाय । एवं ज्ञानहेतुत्वाज्ज्ञानमुच्यते जन्मादिदुःखदोषानुदर्शनम् ॥८॥

किंच—

असक्तिरनभिष्वंगः पुत्रदारगृहादिषु ॥
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥९॥

असक्तिरिति । असक्तिः, सक्तिः संगनिमित्तेषु विषयेषु प्रीतिमात्रं, तदभावोऽसक्तिः । अनभिष्वंगोऽभिष्वंगाभावः । अभिष्वंगो नाम आसक्तिविशेष एव अनन्यात्मभावनालक्षणः; यथाऽन्यस्मिन्सुखिनि दुःखिनि वा 'अहमेव सुखी दुःखी च,' जीवति मृते वा 'अहमेव जीवामि मरिष्यामि च' इति । क्वेत्याह— पुत्रदारगृहादिषु । पुत्रेषु दारेषु गृहेष्वादिग्रहणादन्येष्वप्यत्यंतेष्टेषु दासवर्गादिषु । तच्चोभयं ज्ञानार्थत्वाज्ज्ञानमुच्यते । नित्यं च समचित्तत्वं तुल्यचित्तता । क्व, इष्टानिष्टोपपत्तिषु, इष्टानामनिष्टानां चोपपत्तयः संप्राप्तयः तास्विष्टानिष्टोपपत्तिषु नित्यमेव तुल्यचित्तता । इष्टोपपत्तिषु न हृष्यति, न कुप्यति चानिष्टोपपत्तिषु । तच्चैतन्नित्यं समचित्तत्वं ज्ञानम् ॥९॥

किंच—

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ॥
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥१०॥

मयीति । मयि चेश्वरेऽनन्ययोगेनापृथक्समाधिना नान्यो भगवतो

वासुदेवात्परोऽस्त्यतः स एव नो गतिरित्येवं निश्चिता अव्यभिचारिणी बुद्धिः अनन्ययोगः तेन भजनं भक्तिर्न व्यभिचरणशीला अव्यभिचारिणी । सा च ज्ञानम् । विविक्तदेशसेवित्वं, विविक्तः स्वभावतः संस्कारेण वा अशुच्यादिभिः सर्पव्याघ्रादिभिश्च रहितः अरण्यनदीपुलिनदेवगृहादिभिर्विविक्तो देशः, तं सेवितुं शीलमस्येति विविक्तदेशसेवी, तद्भावो विविक्तदेशसेवित्वम् । विविक्तेषु हि देशेषु चित्तं प्रसीदति यतस्तत आत्मादिभावना विविक्ते उपजायते । अतो विविक्तदेशसेवित्वं ज्ञानमुच्यते । अरतिः अरमणं जनसंसदि, जनानां प्राकृतानां संस्कारशून्यानामविनीतानां संसत्समवायो जनसंसत्; न संस्कारवतां विनीतानां संसत्, तस्याः ज्ञानोपकारकत्वात् । अतः प्राकृतजनसंसद्यरतिः ज्ञानार्थत्वाज्ज्ञानम् ॥१०॥

किंच—

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ॥
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥११॥

अध्यात्मेति । अध्यात्मज्ञाननित्यत्वं आत्मादिविषयं ज्ञानमध्यात्मज्ञानं तस्मिन्नित्यभावो नित्यत्वम् । अमानित्वादीनां ज्ञानसाधनानां भावनापरिपाकनिमित्तं तत्त्वज्ञानं, तस्यार्थो मोक्षः संसारोपरमः, तस्यालोचनं तत्त्वज्ञानार्थदर्शनम् । तत्त्वज्ञानफलालोचने हि तत्साधनानुष्ठाने प्रवृत्तिः स्यादिति । एतत् अमानित्वादितत्त्वज्ञानार्थदर्शनान्तमुक्तं ज्ञानमिति प्रोक्तं ज्ञानार्थत्वात् । अज्ञानं यदतोऽस्माद्यथोक्तादन्यथा विपर्ययेण । मानित्वं दंभित्वं हिंसा अक्षान्तिः अनार्जवं इत्याद्यज्ञानं विज्ञेयं परिहरणाय संसारप्रवृत्तिकारणत्वादिति ॥११॥

यथोक्तेन ज्ञानेन ज्ञातव्यं किं इत्याकांक्षायामाह—'ज्ञेयं यत्तत्' इत्यादि । ननु यमा नियमाश्चामानित्वादयः । न तैर्ज्ञेयं ज्ञायते । न ह्यमानित्वादि कस्यचिद्वस्तुनः परिच्छेदकं दृष्टम् । सर्वत्रैव च यद्विषयं ज्ञानं तदेव तस्य ज्ञेयस्य परिच्छेदकं दृश्यते । न ह्यन्यविषयेण ज्ञानेनान्यदुपलभ्यते । यथा घटविषयेण ज्ञानेनाग्निः । नैष दोषो, ज्ञाननिमित्तत्वाज्ज्ञानमुच्यते इति ह्यवोचाम ।

ज्ञानसहकारिकारणत्वाच्च—

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ॥
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥१२॥

ज्ञेयमिति । ज्ञेयं ज्ञातव्यं यत्तत्प्रवक्ष्यामि प्रकर्षेण यथावद्वक्ष्यामि । किंफलं तदिति प्ररोचनेन श्रोतुरभिमुखीकरणायाह यज्ज्ञेयं ज्ञात्वा अमृतममृतत्वमश्नुते न पुनर्म्रियते इत्यर्थः । अनादिमदादिरस्यास्तीत्यादिमत् । न आदिमदनादिमत् । किं तत्परं निरतिशयं ब्रह्म, ज्ञेयमिति प्रकृतम् ॥

अत्र केचित् 'अनादि मत्परं' इति पदं छिन्दन्ति, बहुव्रीहिणोक्तेऽर्थे मतुप आनर्थक्यमनिष्टं स्यादिति । अर्थविशेषं च दर्शयन्ति—अहं वासुदेवाख्या परा शक्तिः यस्य तन्मत्परमिति । सत्यमेवमपुनरुक्तं स्यात् अर्थश्चेत्संभवति, न त्वर्थः संभवति, ब्रह्मणः सर्वविशेषप्रतिषेधेनैव विजिज्ञापयिषितत्वात्, 'न सत्तन्नासदुच्यते' इति । विशिष्टशक्तिमत्त्वप्रदर्शनं विशेषप्रतिषेधश्चेति विप्रतिषिद्धम् । तस्मान्मतुपो बहुव्रीहिणा समानार्थत्वेऽपि प्रयोगः श्लोकपूरणार्थः ॥

अमृतत्वफलं ज्ञेयं मयोच्यते इति प्ररोचनेनाभिमुखीकृत्याह—न सत्तज्ज्ञेयमुच्यत इति नाप्यसत्तदुच्यते ॥

ननु महता परिकरबंधेन कंठरवेणोद्घुष्य 'ज्ञेयं प्रवक्ष्यामि' इति, अननुरूपमुक्तं 'न सत्तन्नासदुच्यते' इति । न, अनुरूपमेवोक्तम् । कथं? सर्वासु ह्युपनिषत्सु ज्ञेयं ब्रह्म "नेति नेति" "अस्थूलमनणु" इत्यादिविशेषप्रतिषेधेनैव निर्दिश्यते, न 'इदं तत्' इति वाचोऽगोचरत्वात् ॥

ननु न तदस्ति, यद्वस्तु अस्तिशब्देन नोच्यते । अथास्तिशब्देन नोच्यते, नास्ति तज्ज्ञेयम् । विप्रतिषिद्धं च 'ज्ञेयं तत्' 'अस्तिशब्देन नोच्यते' इति च । न तावन्नास्ति, नास्तिबुद्ध्यविषयत्वात् ॥

ननु सर्वा बुद्धयोऽस्तिनास्तिबुद्ध्यनुगता एव। तत्रैवं सति ज्ञेयमप्यस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात्, नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात् । न; अतीन्द्रियत्वेनोभयबुद्ध्यनुगतप्रत्ययाविषयत्वात् । यद्धीन्द्रियगम्यं वस्तु घटादिकं,

तदस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात्, नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात् । इदं तु ज्ञेयमतींद्रियत्वेन शब्दैकप्रमाणगम्यत्वात् न घटादिवदुभयबुद्ध्यनुगतप्रत्ययविषयम्, इत्यतो 'न सत्तन्नासत्' इत्युच्यते ॥

यत्तूक्तं—विरुद्धमुच्यते 'ज्ञेयं तत्' 'न सत्तन्नासदुच्यते' इति न विरुद्धम्, "अन्यदेव तद्विदितादथो अविदितादधि" [केन.१.३] इति श्रुतेः। श्रुतिरपि विरुद्धार्थेति चेत्, यथा यज्ञाय शालामारभ्य 'यद्यमुष्मिँल्लोकेऽस्ति वा न वेति' इत्येवमिति चेत्। न, विदिताविदिताभ्यामन्यत्वश्रुतेरवश्यविज्ञेयार्थप्रतिपादनपरत्वात् 'यद्यमुष्मिन्' इत्यादि तु विधिशेषोऽर्थवादः। उपपत्तेश्च सदसदादिशब्दैर्ब्रह्म नोच्यते इति । सर्वो हि शब्दोऽर्थप्रकाशनाय प्रयुक्तः, श्रूयमाणश्च श्रोतृभिः, जातिक्रियागुणसंबंधद्वारेण संकेतग्रहणं सव्यपेक्षोऽर्थं प्रत्याययति, नान्यथा अदृष्टत्वात् । तद्यथा गौरश्व इति वा जातितः, पचति पठतीति वा क्रियातः, शुक्लः कृष्ण इति वा गुणतः, धनी गोमानिति वा संबंधतः । न तु ब्रह्म जातिमत् अतो न सदादिशब्दवाच्यम् । नापि गुणवद्येन गुणशब्देनोच्येत निर्गुणत्वात् । नापि क्रियाशब्दवाच्यं निष्क्रियत्वात् "निष्कलं निष्क्रियं शान्तम्" [श्वे.६.१९] इति श्रुतेः । न च संबंधी एकत्वात् । अद्वयत्वादविषयत्वादात्मत्वाच्च न केनचिच्छब्देनोच्यत इति युक्तं, "यतो वाचो निवर्तन्ते" [तैत्ति.२.९] इत्यादिश्रुतिभ्यश्च ॥१२॥

सच्छब्दप्रत्ययाविषयत्वादसत्त्वाशंकायां ज्ञेयस्य सर्वप्राणिकरणोपाधिद्वारेण तदस्तित्वं प्रतिपादयंस्तदाशंकानिवृत्त्यर्थमाह—

सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम् ॥
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥१३॥

सर्वत इति । सर्वतःपाणिपादं सर्वतः पाणयः पादाश्चास्येति सर्वतःपाणिपादं तज्ज्ञेयम् । सर्वप्राणिकरणोपाधिभिः क्षेत्रज्ञास्तित्वं विभाव्यते । क्षेत्रज्ञश्च क्षेत्रोपाधित उच्यते । क्षेत्रं च पाणिपादादिभिरनेकधा भिन्नम् । क्षेत्रोपाधिभेदकृतं विशेषजातं मिथ्यैव क्षेत्रज्ञस्य, इति तदपनयनेन ज्ञेयत्वमुक्तं

'न सत्तन्नासदुच्यते' इति । उपाधिकृतं मिथ्यारूपमप्यस्तित्वाधिगमाय ज्ञेयधर्मवत्परिकल्प्योच्यते सर्वतःपाणिपादमित्यादि । तथाहि संप्रदायविदां वचनम्—"अध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंच्यते" इति । सर्वत्र सर्वदेहावयवत्वेन गम्यमानाः पाणिपादादयो ज्ञेयशक्तिसद्भावनिमित्तस्वकार्या इति ज्ञेयसद्भावे लिंगानि ज्ञेयस्येत्युपचारत उच्यन्ते । तथा व्याख्येयमन्यत् । सर्वतःपाणिपादं तज्ज्ञेयम् । सर्वतोक्षिशिरोमुखं सर्वतः अक्षीणि शिरांसि मुखानि च यस्य तत्सर्वतोक्षिशिरोमुखम् । सर्वतःश्रुतिमत् श्रुतिः श्रवणेंद्रियं, तद्यस्य तत् श्रुतिमत्, लोके प्राणिनिकाये सर्वमावृत्य संव्याप्य तिष्ठति स्थितिं लभते ॥१३॥

उपाधिभूतपाणिपादादींद्रियाध्यारोपणाज्ज्ञेयस्य तद्वत्ताशंका मा भूदित्येवमर्थः श्लोकारंभः—

सर्वेंद्रियगुणाभासं सर्वेंद्रियविवर्जितम् ॥
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥१४॥

सर्वेंद्रियेति । सर्वेंद्रियगुणाभासं सर्वाणि च तानींद्रियाणि श्रोत्रादीनि बुद्धींद्रियकर्मेंद्रियाख्यानि, अंतःकरणे च बुद्धिमनसी, ज्ञेयोपाधित्वस्य तुल्यत्वात्, सर्वेंद्रियग्रहणेन गृह्यन्ते । अपि च अंतःकरणोपाधिद्वारेणैव श्रोत्रादीनामप्युपाधित्वमित्यतः अंतःकरणबहिष्करणोपाधिभूतैः सर्वेंद्रियगुणैरध्यवसायसंकल्पश्रवणवचनादिभिरवभासते इति सर्वेंद्रियगुणाभासं सर्वेंद्रियव्यापारैर्व्यापृतमिव तज्ज्ञेयमित्यर्थः, "ध्यायतीव लेलायतीव" [बृ.४.३.७] इति श्रुतेः । कस्मात्पुनः कारणान्न व्यापृतमेवेति गृह्यते इत्यत आह—सर्वेंद्रियविवर्जितं सर्वकरणरहितमित्यर्थः । अतो न करणव्यापारैर्व्यापृतं तज्ज्ञेयम् । यस्त्वयं मंत्रः—"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" [श्वे.३.१९] इत्यादिः, स सर्वेंद्रियोपाधिगुणानुगुण्यभजनशक्तिमत्तज्ज्ञेयमित्येवंप्रदर्शनार्थो, न तु साक्षादेव जवनादिक्रियावत्त्वप्रदर्शनार्थः । "अंधो मणिमविंदत्" इत्यादिमंत्रार्थवत्तस्य मंत्रस्यार्थः । यस्मात्सर्वकरणवर्जितं

ज्ञेयं, तस्मादसक्तं सर्वसंश्लेषवर्जितम् । यद्यप्येवं तथापि सर्वभृच्चैव । सदास्पदं हि सर्वं सर्वत्र सद्बुद्ध्यनुगमात् । न हि मृगतृष्णिकादयोऽपि निरास्पदा भवन्ति । अतः सर्वभृत्सर्वं बिभर्तीति । स्यादिदं चान्यज्ज्ञेयस्य सत्त्वाधिगमद्वारं निर्गुणं सत्त्वरजस्तमांसि गुणास्तैर्वर्जितं तज्ज्ञेयं, तथापि गुणभोक्तृ च गुणानां सत्त्वरजस्तमसां शब्दादिद्वारेण सुखदुःखमोहाकारपरिणतानां भोक्तृ चोपलब्धृ च तज्ज्ञेयमित्यर्थः ॥१४॥

किंच—

बहिरंतश्च भूतानामचरं चरमेव च ॥
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चांतिके च तत् ॥१५॥

बहिरिति । बहिस्त्वक्पर्यन्तं देहमात्मत्वेनाविद्याकल्पितमपेक्ष्य तमेवावधिं कृत्वा बहिरुच्यते । तथा प्रत्यगात्मानमपेक्ष्य देहमेवावधिं कृत्वा अंतरुच्यते । बहिरंतश्चेत्युक्ते मध्येऽभावे प्राप्ते इदमुच्यते अचरं चरमेव च, यच्चराचरं देहाभासमपि तदेव ज्ञेयं यथा रज्जुसर्पाभासः । यदि अचरं चरमेव च स्यात् व्यवहारविषयं सर्वं ज्ञेयं, किमर्थमिदामिति सर्वैर्न विज्ञेयमिति । उच्यते, सत्यं सर्वाभासं तत्, तथापि व्योमवत्सूक्ष्मम् । अतः सूक्ष्मत्वात्स्वेन रूपेण तज्ज्ञेयमप्यविज्ञेयमविदुषाम् । विदुषां तु 'आत्मैवेदं सर्वं' 'ब्रह्मैवेदं सर्वं' इत्यादिप्रमाणतो नित्यं विज्ञातम् । विज्ञाततया दूरस्थं वर्षसहस्रकोट्याप्यविदुषामप्राप्यत्वात् । अंतिके च तदात्मत्वाद्विदुषाम् ॥१५॥

किंच—

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ॥
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥१६॥

अविभक्तमिति । अविभक्तं च प्रतिदेहं व्योमवत्तदेकम् । भूतेषु सर्वप्राणिषु विभक्तमिव च स्थितं देहेष्वेव विभाव्यमानत्वात् । भूतभर्तृ च भूतानि बिभर्तीति तज्ज्ञेयं भूतभर्तृ च स्थितिकाले । प्रलयकाले ग्रसिष्णु ग्रसनशीलम् । उत्पत्तिकाले प्रभविष्णु च प्रभवनशीलं यथा रज्ज्वादिः सर्पा-

देर्मिथ्याकल्पितस्य ॥१६॥

किंच सर्वत्र विद्यमानमपि सन्नोपलभ्यते चेत्, ज्ञेयं तमस्तर्हि । न, किं तर्हि—

**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ॥**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥१७॥**

ज्योतिषामिति । ज्योतिषामादित्यादीनामपि तज्ज्ञेयं ज्योतिः । आत्मचैतन्यज्योतिषा इद्धानि ह्यादित्यादीनि ज्योतींषि दीप्यन्ते, "येन सूर्यस्तपति तेजसेद्धः" [ ], "तस्य भासा सर्वमिदं विभाति" [श्वे.६.१४] इत्यादिश्रुतिभ्यः । स्मृतेश्चेहैव 'यदादित्यगतं तेजः' [गी.१५.१२] इत्यादेः । तमसोऽज्ञानात्परमस्पृष्टमुच्यते । ज्ञानादेर्दुःसंपादनबुद्ध्या प्राप्तावसादस्योत्तंभनार्थमाह ज्ञानं अमानित्वादि । ज्ञेयं ज्ञेयं यत्तत्प्रवक्ष्यामीत्यादिनोक्तम् । ज्ञानगम्यं ज्ञेयमेव ज्ञातं सज्ज्ञानफलमिति ज्ञानगम्यमुच्यते । ज्ञायमानं तु ज्ञेयम् । तदेतत् त्रयमपि हृदि बुद्धौ सर्वस्य प्राणिजातस्य विष्ठितं विशेषेण स्थितम् । तत्रैव हि त्रयं विभाव्यते ॥१७॥

यथोक्तार्थोपसंहारार्थोऽयं श्लोक आरभ्यते—

**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ॥**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥१८॥**

इति क्षेत्रमिति । इत्येवं क्षेत्रं महाभूतादि धृत्यंतं, तथा ज्ञानममानित्वादि तत्त्वज्ञानार्थदर्शनपर्यंतं, ज्ञेयं च 'ज्ञेयं यत्तत्' इत्यादि 'तमसः परमुच्यते' इत्येवमंतमुक्तं समासतः संक्षेपतः । एतावान्सर्वो हि वेदार्थो गीतार्थश्चोपसंहृत्योक्तः । अस्मिन्सम्यग्दर्शने कोऽधिक्रियते इत्युच्यते—मद्भक्तो मयीश्वरे सर्वज्ञे परमगुरौ वासुदेवे समर्पितसर्वात्मभावो, यत्पश्यति शृणोति स्पृशति वा सर्वमेव भगवान्वासुदेव इत्येवंग्रहाविष्टबुद्धिर्मद्भक्तः स एतद्यथोक्तं सम्यग्दर्शनं विज्ञाय, मद्भावाय मम भावो मद्भावः परमात्मभावस्तस्मै मद्भावायोपपद्यते मोक्षं गच्छति ॥१८॥

तत्र सप्तमे ईश्वरस्य द्वे प्रकृती उपन्यस्ते परापरे क्षेत्रक्षेत्रज्ञलक्षणे । 'एतद्योनीनि भूतानि' [गी.७.६] इति चोक्तम् । क्षेत्रक्षेत्रज्ञप्रकृतिद्वययोनित्वं कथं भूतानामित्ययमर्थोऽधुनोच्यते—

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ॥**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥१९॥**

प्रकृतिमिति । प्रकृतिं पुरुषं चैव ईश्वरस्य प्रकृती तौ प्रकृतिपुरुषौ उभावप्यनादी विद्धि । न विद्यते आदिर्ययोस्तौ अनादी । नित्येश्वरत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुम् । प्रकृतिद्वयवत्त्वमेव हीश्वरस्येश्वरत्वम् । याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिप्रलयहेतुः, ते द्वे अनादी सत्यौ संसारस्य कारणम् ॥

न आदी अनादी इति तत्पुरुषसमासं केचिद्वर्णयन्ति । तेन हि किल ईश्वरस्य कारणत्वं सिध्यति । यदि पुनः प्रकृतिपुरुषावेव नित्यौ स्यातां तत्कृतमेव जगत् नेश्वरस्य जगतः कर्तृत्वम् । तदसत्, प्राक्प्रकृतिपुरुषयोरुत्पत्तेरीशितव्याभावादीश्वरस्यानीश्वरत्वप्रसंगात् । संसारस्य निर्निमित्तत्वे अनिर्मोक्षप्रसंगाच्छास्त्रानर्थक्यप्रसंगाद्बंधमोक्षाभावप्रसंगाच्च । नित्यत्वे पुनरीश्वरस्य प्रकृत्योः सर्वमेतदुपपन्नं भवेत् । कथं, विकारांश्च गुणांश्चैव वक्ष्यमाणान्विकारान्बुद्ध्यादिदेहेंद्रियांतान्गुणांश्च सुखदुःखमोहप्रत्ययाकारपरिणतान्विद्धि जानीहि प्रकृतिसंभवान्, प्रकृतिरीश्वरस्य विकारकारणशक्तिस्त्रिगुणात्मिका माया, सा संभवो येषां विकाराणां गुणानां च तान्विकारान्गुणांश्च विद्धि प्रकृतिसंभवान्प्रकृतिपरिणामान् ॥१९॥

के पुनस्ते विकारा गुणाश्च प्रकृतिसंभवाः—

**कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ॥**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥२०॥**

कार्येति । कार्यकरणकर्तृत्वे कार्यं शरीरं करणानि तत्स्थानि त्रयोदश । देहस्यारंभकाणि भूतानि पंच विषयाश्च प्रकृतिसंभवा विकाराः पूर्वोक्ता इह

कार्यग्रहणेन गृह्यन्ते । गुणाश्च प्रकृतिसंभवाः सुखदुःखमोहात्मकाः करणाश्रयत्वाकरणग्रहणेन गृह्यन्ते । तेषां कार्यकरणानां कर्तृत्वमुत्पादकत्वं यत्तत्कार्यकरणकर्तृत्वं तस्मिन्कार्यकरणकर्तृत्वे हेतुः कारणमारंभकत्वेन प्रकृतिरुच्यते । एवं कार्यकारणकर्तृत्वेन संसारस्य कारणं प्रकृतिः । कार्यकारणकर्तृत्वे इत्यस्मिन्नपि पाठे, कार्यं यद्यस्य परिणामस्तत्तस्य कार्यं विकारो विकारि कारणं तयोर्विकारविकारिणोः कार्यकारणयोः कर्तृत्वे इति । अथवा, षोडश विकाराः कार्यं, सप्त प्रकृतिविकृतयः कारणं, तान्येव कार्यकारणान्युच्यन्ते । तेषां कर्तृत्वे हेतुः प्रकृतिरुच्यते आरंभकत्वेनैव । पुरुषश्च संसारस्य कारणं यथा स्यात्तदुच्यते—पुरुषो जीवः क्षेत्रज्ञो भोक्तेतिपर्यायः, सुखदुःखानां भोग्यानां भोक्तृत्वे उपलब्धृत्वे हेतुरुच्यते ॥

कथं पुनरनेन कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च प्रकृतिपुरुषयोः संसारकारणत्वमुच्यते इति । अत्रोच्यते । कार्यकरणसुखदुःखरूपेण हेतुफलात्मना प्रकृतेः परिणामाभावे, पुरुषस्य च चेतनस्यासति तदुपलब्धृत्वे, कुतः संसारः स्यात् । यदा पुनः कार्यकरणसुखदुःखरूपेण हेतुफलात्मना परिणतया प्रकृत्या भोग्यया पुरुषस्य तद्विपरीतस्य भोक्तृत्वेन अविद्यारूपः संयोगः स्यात्, तदा संसारः स्यादिति । अतो यत्प्रकृतिपुरुषयोः कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च संसारकारणत्वमुक्तं तद्युक्तम् । कः पुनरयं संसारो नाम । सुखदुःखसंभोगः संसारः, पुरुषस्य च सुखदुःखानां संभोक्तृत्वं संसारित्वमिति ॥२०॥

यत्पुरुषस्य सुखदुःखानां भोक्तृत्वं संसारित्वमित्युक्तं तस्य तत्किंनिमित्तमित्युच्यते—

**पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान्गुणान् ॥**
**कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु ॥२१॥**

पुरुष इति । पुरुषो भोक्ता प्रकृतिस्थः प्रकृतौ अविद्यालक्षणायां कार्यकरणरूपेण परिणतायां स्थितः प्रकृतिस्थः, प्रकृतिमात्मत्वेन गत इत्येतत्,

हि यस्मात्, तस्मात् भुंक्ते उपलभते इत्यर्थः । प्रकृतिजान्प्रकृतितो जातान् सुखदुःखमोहाकाराभिव्यक्तान्गुणान् सुखी दुःखी मूढः पंडितोऽहमित्येवम् । सत्यामप्यविद्यायां सुखदुःखमोहेषु गुणेषु भुज्यमानेषु यः संग आत्मभावः संसारस्य स प्रधानं कारणं जन्मनः, "स यथाकामो भवति तत्क्रतुर्भवति" [बृ. ४.४.५] इत्यादिश्रुतेः । तदेतदाह—कारणं हेतुर्गुणसंगो गुणेषु संगोऽस्य पुरुषस्य भोक्तुः, सदसद्योनिजन्मसु सत्यश्चासत्यश्च योनयः सदसद्योनयस्तासु सदसद्योनिषु जन्मानि सदसद्योनिजन्मानि तेषु सदसद्योनिजन्मसु विषयभूतेषु कारणं गुणसंगः । अथवा सदसद्योनिजन्मसु अस्य संसारस्य कारणं गुणसंग इति संसारपदमध्याहार्यम् । सद्योनयो देवादियोनयः, असद्योनयः पश्वादियोनयः । सामर्थ्यात्सदसद्योनयो मनुष्ययोनयोऽप्यविरुद्धा द्रष्टव्याः ॥

एतदुक्तं भवति—प्रकृतिस्थत्वाख्या अविद्या, गुणेषु च संगः कामः, संसारस्य कारणमिति । तच्च परिवर्जनायोच्यते । अस्य च निवृत्तिकारणं ज्ञानवैराग्ये ससंन्यासे गीताशास्त्रे प्रसिद्धम् । तच्च ज्ञानं पुरस्तादुपन्यस्तं क्षेत्रक्षेत्रज्ञविषयम् 'यज्ज्ञात्वाऽमृतमश्नुते' [गी. १३.१२] इति । उक्तं चान्यापोहेन अतद्धर्माध्यारोपेण च ॥२१॥

तस्यैव पुनः साक्षान्निर्देशः क्रियते—

**उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ॥**
**परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥२२॥**

उपद्रष्टेति । उपद्रष्टा समीपस्थः सन्द्रष्टा स्वयमव्यापृतः । यथर्त्विग्यजमानेषु यज्ञकर्मव्यापृतेषु तटस्थोऽन्योऽव्यापृतो यज्ञविद्याकुशल ऋत्विग्यजमानव्यापारगुणदोषाणामीक्षिता, तद्वत्कार्यकरणव्यापारेष्वव्यापृतोऽन्यो तद्विलक्षणस्तेषां कार्यकरणानां सव्यापाराणां सामीप्येन द्रष्टोपद्रष्टा । अथवा देहचक्षुर्मनोबुद्ध्यात्मानो द्रष्टारः, तेषां बाह्यो द्रष्टा देहः, तत आरभ्यांतरतमश्च प्रत्यक्समीपे आत्मा द्रष्टा । यतः परोऽन्तरतमो नास्ति द्रष्टा सोऽतिशयसामीप्येन द्रष्टृत्वादुपद्रष्टा स्यात् । यज्ञोपद्रष्टृवद्वा सर्वविषयीकरणादुपद्रष्टा ।

अनुमन्ता च, अनुमोदनमनुमननं कुर्वत्सु तत्क्रियासु परितोषः तत्कर्ताऽनुमन्ता च । अथवा अनुमन्ता कार्यकरणप्रवृत्तिषु स्वयमप्रवृत्तोऽपि प्रवृत्त इव तदनुकूलो विभाव्यते तेनानुमन्ता । अथवा प्रवृत्तान्स्वव्यापारेषु तत्साक्षिभूतः कदाचिदपि न निवारयतीत्यनुमन्ता । भर्ता भरणं नाम देहेंद्रियमनोबुद्धीनां संहतानां चैतन्यात्मपारार्थ्येन निमित्तभूतेन चैतन्याभासानां यत्स्वरूपधारणं तच्चैतन्यात्मकृतमेवेति भर्ता आत्मेत्युच्यते । भोक्ता, अग्न्युष्णवन्नित्यचैतन्यस्वरूपेण बुद्धेः सुखदुःखमोहात्मकाः प्रत्ययाः सर्वविषयविषयाश्चैतन्यात्मग्रस्ता इव जायमाना विभक्ता विभाव्यन्ते इति भोक्ता आत्मा उच्यते । महेश्वरः, सर्वात्मत्वात्स्वतंत्रत्वाच्च महान् ईश्वरश्चेति महेश्वरः । परमात्मा, देहादीनां बुद्ध्यंतानां प्रत्यगात्मत्वेन कल्पितानामविद्यया परम उपद्रष्टृत्वादिलक्षण आत्मेति परमात्मा । सोऽतः परमात्मा इत्यनेन शब्देन चाप्युक्तः कथितः श्रुतौ । क्वासौ अस्मिन्देहे पुरुषः परोऽव्यक्तात् । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' [गी.१५.१७] इति यो वक्ष्यमाणः 'क्षेत्रज्ञं चापि मां विद्धि' [गी.१३.२] इत्युपन्यस्तो व्याख्यायोपसंहृतश्च ॥२२॥

तमेतं यथोक्तलक्षणमात्मानं—

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ॥
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥२३॥

य एवमिति । य एवं यथोक्तप्रकारेण वेत्ति पुरुषं साक्षादहमिति प्रकृतिं च यथोक्तामविद्यालक्षणां गुणैः स्वविकारैः सह निवर्तितामभावमापादितां विद्यया, सर्वथा सर्वप्रकारेण वर्तमानोऽपि स भूयः पुनः पतितेऽस्मिन्विद्वच्छरीरे देहान्तराय नाभिजायते नोत्पद्यते देहान्तरं न गृह्णातीत्यर्थः । अपिशब्दात्किमु वक्तव्यं स्ववृत्तस्थो न जायते इत्यभिप्रायः ॥

ननु यद्यपि ज्ञानोत्पत्त्यनंतरं पुनर्जन्माभाव उक्तः, तथापि प्राग्ज्ञानोत्पत्तेः कृतानां कर्मणामुत्तरकालभाविनां च, यानि चातिक्रान्तानेकजन्मकृतानि तेषां च, फलमदत्त्वा नाशो न युक्त इति, स्युस्त्रीणि जन्मानि कृतविप्रणाशो

हि न युक्त इति, यथा फले प्रवृत्तानामारब्धजन्मनां कर्मणाम्। न च कर्मणां विशेषोऽवगम्यते। तस्मात् त्रिप्रकाराण्यपि कर्माणि त्रीणि जन्मान्यारभेरन् संहृतानि वा सर्वाण्येकं जन्मारभेरन्। अन्यथा कृतविनाशे सति सर्वत्रानाश्वासप्रसंगः शास्त्रानर्थक्यं च स्यात्। इत्यत इदमयुक्तमुक्तं 'न स भूयोऽभिजायते' इति। न। "क्षीयन्ते चास्य कर्माणि" [मुंडक.२.२.८], "ब्रह्म वेद ब्रह्मैव भवति" [मुं.३.२.९], "तस्य तावदेव चिरं" [छां.६.१४.२], "ईषीकातूलवत्सर्वकर्माणि प्रदूयन्ते" [छां.५.२४.३] इत्यादिश्रुतिशतेभ्य उक्तो विदुषः सर्वकर्मदाहः। इहापि चोक्तो 'यथैधांसि' [गी.४.३७] इत्यादिना सर्वकर्मदाहः वक्ष्यति च। उपपत्तेश्च अविद्याकामक्लेशबीजनिमित्तानि हि कर्माणि जन्मान्तरांकुरमारभन्ते। इहापि च साहंकाराभिसंधीनि कर्माणि फलारंभकाणि नेतराणि इति तत्र तत्र भगवतोक्तम्। "बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः। ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः" [मभा.शां.१११.१७;वन.१९९.१०७] इति च॥ अस्तु तावज्ज्ञानोत्पत्त्युत्तरकालकृतानां कर्मणां ज्ञानेन दाहो ज्ञानसहभावित्वात्। न त्विह जन्मनि ज्ञानोत्पत्तेः प्राक्कृतानां कर्मणां अतीतजन्मकृतानां च दाहो युक्तः। न, 'सर्वकर्माणि' इतिविशेषणात्। ज्ञानोत्तरकालभाविनामेव सर्वकर्मणामिति चेत्। न, संकोचे कारणानुपपत्तेः। यत्तूक्तं—यथा वर्तमानजन्मारंभकाणि कर्माणि न क्षीयन्ते फलदानाय प्रवृत्तान्येव सत्यपि ज्ञाने, तथा अनारब्धफलानामपि कर्मणां क्षयो न युक्तः—इति, तदसत्। कथं, तेषां मुक्तेषुवत्प्रवृत्तफलत्वात्। यथा पूर्वं लक्ष्यवेधाय मुक्त इषुर्धनुषो लक्ष्यवेधोत्तरकालमप्यारब्धवेगक्षयात्पतनेनैव निवर्तते एवं शरीरारंभकं कर्म शरीरस्थितिप्रयोजने निवृत्तेऽपि आसंस्कारवेगक्षयात्पूर्ववद्वर्तते एव। स एव इषुः प्रवृत्तिनिमित्तानारब्धवेगस्तु अमुक्तो धनुषि प्रयुक्तोऽप्युपसंह्रियते, तथा अनारब्धफलानि कर्माणि स्वाश्रयस्थान्येव ज्ञानेन निर्बीजीक्रियन्ते इति; पतितेऽस्मिन्विद्वच्छरीरे 'न स भूयोऽभिजायते' इति युक्तमेवोक्तमिति सिद्धम्॥२३॥

अनात्मदर्शने उपायविकल्पा इमे ध्यानादय उच्यन्ते—

**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ॥**
**अन्ये सांख्येन योगेन कर्मयोगेण चापरे ॥२४॥**

ध्यानेनेति। ध्यानेन, ध्यानं नाम शब्दादिभ्यो विषयेभ्यः श्रोत्रादीनि करणानि मनस्युपसंहृत्य, मनश्च प्रत्यक्चेतयितरि, एकाग्रतया यच्चिंतनं तद्ध्यानम्। तथा ध्यायतीव बको, ध्यायतीव पृथिवी, ध्यायन्तीव पर्वता इत्युपमोपादानात्तैलधारावत्संततोऽविच्छिन्नप्रत्ययो ध्यानं; तेन ध्यानेनात्मनि बुद्धौ पश्यन्त्यात्मानं प्रत्यक्चेतनमात्मना स्वेनैव प्रत्यक्चेतनेन ध्यानसंस्कृतेनांतःकरणेन केचिद्योगिनः। अन्ये सांख्येन योगेन, सांख्यं नाम—इमे सत्त्वरजस्तमांसि गुणा मया दृश्या अहं तेभ्योऽन्यस्तद्व्यापारसाक्षिभूतो नित्यो गुणविलक्षण आत्मा— इति चिंतनं एष सांख्यो योगः, तेन 'पश्यन्त्यात्मानमात्मना' इति वर्तते। कर्मयोगेण, कर्मैव योगः ईश्वरार्पणबुद्ध्या अनुष्ठीयमानं घटनरूपं योगार्थत्वाद्योग उच्यते गुणतः, तेन सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण चापरे ॥२५॥

**अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ॥**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥२५॥**

अन्ये त्विति। अन्ये त्वेषु विकल्पेष्वन्यतरेणाप्येवं यथोक्तमात्मानमजानन्तोऽन्येभ्य आचार्येभ्यः श्रुत्वा इदमेव चिन्तयत इत्युक्ता उपासते श्रद्दधानाः सन्तश्चिंतयन्ति। तेऽपि चातितरन्त्येवातिक्रामन्त्येव मृत्युं, मृत्युयुक्तं संसारमित्येतत्। श्रुतिपरायणाः श्रुतिः श्रवणं परमयनं गमनं मोक्षमार्गप्रवृत्तौ परं साधनं येषां ते श्रुतिपरायणाः केवलपरोपदेशप्रमाणाः स्वयं विवेकरहिता इत्यभिप्रायः। किमु वक्तव्यं प्रमाणं प्रति स्वतंत्रा विवेकिनो मृत्युमतितरन्तीत्यभिप्रायः ॥२५॥

क्षेत्रज्ञेश्वरैकत्वविषयं ज्ञानं मोक्षसाधनं 'यज्ज्ञात्वामृतमश्नुते' [गी. १३. १२] इत्युक्तं, तत्कस्माद्धेतोः इति, तद्धेतुप्रदर्शनार्थं श्लोक आरंभ्यते—

यावत्संजायते किंचित्सत्त्वं स्थावरजंगमम् ॥
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥२६॥

यावदिति । यावद्यत्किंचित्संजायते समुत्पद्यते सत्त्वं वस्तु, किमविशेषेण नेत्याह स्थावरजंगमं स्थावरं जंगमं च क्षेत्रक्षेत्रज्ञसंयोगात्तज्जायते इत्येवं विद्धि जानीहि हे भरतर्षभ ॥

कः पुनरयं क्षेत्रक्षेत्रज्ञयोः संयोगोऽभिप्रेतः । न तावद्रज्ज्वेव घटस्यावयवसंश्लेषद्वारकः संबंधविशेषः संयोगः क्षेत्रेण क्षेत्रज्ञस्य संभवति आकाशवन्निरवयवत्वात् । नापि समवायलक्षणः तंतुपटयोरिव क्षेत्रक्षेत्रज्ञयोः इतरेतरकार्यकारणभावानभ्युपगमादिति उच्यते, क्षेत्रक्षेत्रज्ञयोर्विषयविषयिणोर्भिन्नस्वभावयोरितरेतरतद्धर्माध्यासलक्षणः संयोगः क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबंधनो रज्जुशुक्तिकादीनां तद्विवेकज्ञानाभावादध्यारोपितसर्परजतादिसंयोगवत् । सोऽयमध्यासस्वरूपः क्षेत्रक्षेत्रज्ञसंयोगो मिथ्याज्ञानलक्षणः । यथाशास्त्रं क्षेत्रक्षेत्रज्ञलक्षणभेदपरिज्ञानपूर्वकं प्राग्दर्शितरूपात्क्षेत्रात् मुंजादिव ईषीकां यथोक्तलक्षणं क्षेत्रज्ञं प्रविभज्य 'न सत्तन्नासदुच्यते' [गी.१३.१२] इत्यनेन निरस्तसर्वोपाधिविशेषं ज्ञेयं ब्रह्म स्वरूपेण यः पश्यति, क्षेत्रं च मायानिर्मितहस्तिस्वप्नदृष्टवस्तुगंधर्वनगरादिवत् असदेव सदिवावभासते इत्येवं निश्चितविज्ञानो यः, तस्य यथोक्तसम्यग्दर्शनविरोधादपगच्छति मिथ्याज्ञानम् । तस्य जन्महेतोरपगमात् 'य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह' [गी.१३.२३] इत्यनेन 'विद्वान्भूयो नाभिजायते' इति यदुक्तं तदुपपन्नमुक्तम् ॥२६॥

'न स भूयोऽभिजायते' [गी.१३.२३] इति सम्यग्दर्शनफलमविद्यादिसंसारबीजनिवृत्तिद्वारेण जन्माभाव उक्तः । जन्मकारणं चाविद्यानिमित्तकः क्षेत्रक्षेत्रज्ञसंयोग उक्तः । अतस्तस्या अविद्याया निवर्तकं सम्यग्दर्शनमुक्तमपि पुनः शब्दान्तरेणोच्यते—

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ॥
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥२७॥

सममिति । समं निर्विशेषं तिष्ठन्तं स्थितिं कुर्वन्तं, क्व सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु, कं परमेश्वरं देहेंद्रियमनोबुद्ध्यव्यक्तात्मनोऽपेक्ष्य परमेश्वरः तं सर्वेषु भूतेषु समं तिष्ठन्तम् । तानि विशिनष्टि विनश्यत्स्विति, तं च परमेश्वरमविनश्यन्तमिति, भूतानां परमेश्वरस्य चात्यंतवैलक्षण्यप्रदर्शनार्थम् । कथं, सर्वेषां हि भावविकाराणां जनिलक्षणो भावविकारो मूलं, जन्मोत्तरभाविनोऽन्ये सर्वे भावविकारा विनाशान्ताः । विनाशात्परो न कश्चिदस्ति भावविकारो भावाभावात् । सति हि धर्मिणि धर्मा भवन्ति । अतः अंत्यभावविकाराभावानुवादेन पूर्वभाविनः सर्वे भावविकाराः प्रतिषिद्धा भवन्ति सह कार्यैः । तस्मात्सर्वभूतैर्वैलक्षण्यमत्यंतमेव परमेश्वरस्य सिद्धं निर्विशेषत्वमेकत्वं च । यं एवं यथोक्तं परमेश्वरं पश्यति स पश्यति ॥

ननु सर्वोऽपि लोकः पश्यति, किं विशेषणेनेति । सत्यं पश्यति, किंतु विपरीतं पश्यति । अतो विशिनष्टि स एव पश्यतीति । यथा तिमिरदृष्टिरनेकं चंद्रं पश्यति, तमपेक्ष्यैकचंद्रदर्शी विशिष्यते स एव पश्यतीति, तथैवेहाप्येकमविभक्तं यथोक्तमात्मानं यः पश्यति स विभक्तानेकात्मविपरीतदर्शिभ्यो विशिष्यते स एव पश्यतीति । इतरे पश्यन्तोऽपि न पश्यन्ति, विपरीतदर्शित्वादनेकचंद्रदर्शिवदित्यर्थः ॥२७॥

यथोक्तस्य सम्यग्दर्शनस्य फलवचनेन स्तुतिः कर्तव्येति श्लोक आरभ्यते—

**समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ॥**
**न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥२८॥**

सममिति । समं पश्यन्नुपलभमानो हि यस्मात्सर्वत्र सर्वभूतेषु समवस्थितं तुल्यतया अवस्थितमीश्वरमतीतानंतरश्लोकोक्तलक्षणमित्यर्थः । समं पश्यन्किं, न हिनस्ति हिंसां न करोत्यात्मना स्वेनैव स्वमात्मानम् । ततस्तदहिंसनाद्याति परां प्रकृष्टां गतिं मोक्षाख्याम् ॥

ननु नैव कश्चित्प्राणी स्वयं स्वमात्मानं हिनस्ति । कथमुच्यतेऽप्राप्तं 'न

हिनस्ति' इति । यथा 'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे' इत्यादि । नैष दोषः, अज्ञानामात्मतिरस्करणोपपत्तेः । सर्वो ह्यज्ञोऽत्यंतप्रसिद्धं साक्षादपरोक्षादात्मानं तिरस्कृत्य अनात्मानमात्मत्वेन परिगृह्य, तमपि धर्माधर्मौ कृत्वोपात्तमात्मानं हत्वा अन्यमात्मानमुपादत्ते, नवं तं चैवं हत्वाऽन्यमेवं तमपि हत्वाऽन्यमित्येवमुपात्तमुपात्तमात्मानं हन्तीत्यात्महा सर्वोऽज्ञः । यस्तु परमार्थात्मा असावपि सर्वदा अविद्यया हत इव, विद्यमानफलाभावात्, इति सर्वे आत्महन एवाविद्वांसः । यस्त्वितरो यथोक्तात्मदर्शी स उभयथाप्यात्मनात्मानं न हिनस्ति न हन्ति । ततो याति परां गतिं यथोक्तं फलं तस्य भवतीत्यर्थः ॥

सर्वभूतस्थमीश्वरं समं पश्यन्न हिनस्त्यात्मनात्मानमित्युक्तं तदनुपपन्नं स्वगुणकर्मवैलक्षण्यभेदाभिन्नेष्वात्मसु इत्येतदाशंक्याह—

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ॥**
**यः पश्यति तथात्मानमकर्तारं स पश्यति ॥२९॥**

प्रकृत्येति । प्रकृत्या प्रकृतिर्भगवतो माया त्रिगुणात्मिका, 'मायां तु प्रकृतिं विद्यात्' [श्वे.४.१०] इति मंत्रवर्णात्, तया प्रकृत्यैव च नान्येन महदादिकार्यकारणाकारपरिणतया कर्माणि वाङ्मनःकायारभ्याणि क्रियमाणानि निर्वर्त्यमानानि सर्वशः सर्वप्रकारैर्यः पश्यत्युपलभते, तथात्मानं क्षेत्रज्ञमकर्तारं सर्वोपाधिविवर्जितं स पश्यति, स परमार्थदर्शीत्यभिप्रायः । निर्गुणस्याकर्तुर्निर्विशेषस्याकाशस्येव भेदे प्रमाणानुपपत्तिरित्यर्थः ॥२९॥

पुनरपि तदेव सम्यग्दर्शनं शब्दान्तरेण प्रपंचयति—

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ॥**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥३०॥**

यदेति । यदा यस्मिन्काले भूतपृथग्भावं भूतानां पृथग्भावं पृथक्त्वमेकस्थमेकस्मिन्नात्मानि स्थितमेकस्थं, अनुपश्यति शास्त्राचार्योपदेशं अनु आत्मानं प्रत्यक्षत्वेन पश्यति आत्मैवेदं सर्वमिति । तत एव च तस्मादेव च विस्तारमुत्पत्तिं विकासं 'आत्मतः प्राण आत्मत आशा आत्मतः स्मर आत्मत

आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावौ आत्मतोऽन्नं' इत्येवमादिप्रकारैर्विस्तारं यदा पश्यति, ब्रह्म संपद्यते ब्रह्मैव भवति तदा तस्मिन्काले इत्यर्थः ॥३०॥

एकस्यात्मनः सर्वदेहात्मत्वे तद्दोषसंबंधे प्राप्ते इदमुच्यते--

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ॥
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥३१॥

अनादित्वादिति। अनादित्वादनादेर्भावोऽनादित्वं, आदिः कारणं, तद्यस्य नास्ति तदनादि। यद्धि आदिमत्तत्स्वेनात्मना व्येति, अयं त्वनादित्वान्निरवयव इति कृत्वा न व्येति। तथा निर्गुणत्वात्। सगुणो हि गुणव्ययात् व्येति, अयं तु निर्गुणत्वान्न व्येति इति परमात्मायमव्ययो, नास्य व्ययो विद्यते इत्यव्ययः। यत एवमतः शरीरस्थोऽपि शरीरेष्वात्मन उपलब्धिर्भवतीति शरीरस्थ उच्यते तथापि न करोति, तदकरणादेव तत्फलेन न लिप्यते। यो हि कर्ता स कर्मफलेन लिप्यते, अयं त्वकर्ता अतो न फलेन लिप्यते इत्यर्थः॥

कः पुनर्देहेषु करोति लिप्यते च? यदि तावदन्यः परमात्मनो देही करोति लिप्यते च, तत इदमनुपपन्नमुक्तं क्षेत्रज्ञेश्वरैकत्वं 'क्षेत्रज्ञं चापि मां विद्धि' [गी.१३.२] इत्यादि। अथ नास्तीश्वरादन्यो देही, कः करोति लिप्यते च, इति वाच्यं, परो वा नास्तीति सर्वथा दुर्विज्ञेयं दुर्वाच्यं चेति भगवत्प्रोक्तमौपनिषदं दर्शनं परित्यक्तं वैशेषिकैः सांख्यार्हतबौद्धैश्च। तत्रायं परिहारो भगवता स्वेनैवोक्तः 'स्वभावस्तु प्रवर्तते' [गी.५.१४] इति। अविद्यामात्रस्वभावो हि करोति लिप्यते इति व्यवहारो भवति, न तु परमार्थत एकस्मिन्परमात्मनि तदस्ति। अत एतस्मिन्परमार्थसांख्यदर्शने स्थितानां ज्ञाननिष्ठानां परमहंसपरिव्राजकानां तिरस्कृताविद्याव्यवहाराणां कर्माधिकारो नास्तीति तत्र तत्र दर्शितं भगवता ॥३१॥

किमिव न करोति न लिप्यते इत्यत्र दृष्टान्तमाह—

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ॥
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥३२॥

यथेति । यथा सर्वगतं व्याप्यपि सत् सौक्ष्म्यात्सूक्ष्मभावादाकाशं खं नोपलिप्यते न संबध्यते, सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥३२॥

किंच—

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ॥
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥३३॥

यथेति । यथा प्रकाशयत्यवभासयत्येकः कृत्स्नं लोकमिमं रविः सवितादित्यः, तथा तद्वन्महाभूतादि धृत्यंतं क्षेत्रमेकः सन्प्रकाशयति । कः क्षेत्री परमात्मेत्यर्थः । रविदृष्टान्तोऽत्रात्मन उभयार्थोऽपि भवति रविवत्सर्वक्षेत्रेष्वेक आत्मा अलेपकश्चेति ॥३३॥

समस्ताध्यायार्थोपसंहारार्थोऽयं श्लोकः—

क्षेत्रक्षेत्रज्ञयोरेवमंतरं ज्ञानचक्षुषा ॥
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥३४॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे प्रकृतिपुरुषविवेकयोगो नाम त्रयोदशोऽध्यायः ॥१३॥

क्षेत्रक्षेत्रज्ञेति । क्षेत्रक्षेत्रज्ञयोर्यथाव्याख्यातयोः एवं यथाप्रदर्शितप्रकारेण अंतरमितरेतरवैलक्षण्यविशेषं ज्ञानचक्षुषा शास्त्राचार्यप्रसादोपदेशजनितमात्मप्रत्ययिकं ज्ञानं चक्षुः तेन ज्ञानचक्षुषा, भूतप्रकृतिमोक्षं च भूतानां प्रकृतिरविद्यालक्षणा अव्यक्ताख्या तस्या भूतप्रकृतेर्मोक्षणमभावगमनं च ये विदुर्विजानन्ति, यान्ति गच्छन्ति ते परं परमार्थतत्त्वं ब्रह्म, न पुनर्देहमाददते इत्यर्थः ॥३४॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये क्षेत्रक्षेत्रज्ञयोगो नाम त्रयोदशोऽध्यायः ॥१३॥

---

## अथ चतुर्दशोऽध्यायः ।

सर्वमुत्पद्यमानं क्षेत्रक्षेत्रज्ञसंयोगादुत्पद्यते इत्युक्तम् । तत्कथमिति तत्प्रदर्शनार्थं 'परं भूयः' इत्यादिरध्याय आरभ्यते। अथवा ईश्वरपरतंत्रयोः क्षेत्रक्षेत्रज्ञयोर्जगत्कारणत्वं, न तु सांख्यानामिव स्वतंत्रयोरित्येवमर्थम् । प्रकृतिस्थत्वं गुणेषु च संगः संसारकारणमित्युक्तम् । कस्मिन्गुणे कथं संगः, के वा गुणाः, कथं वा ते बध्नन्तीति, गुणेभ्यश्च मोक्षणं कथं स्यात्, मुक्तस्य च लक्षणं वक्तव्यं, इत्येवमर्थं च भगवान् उवाच—

श्रीभगवानुवाच ।

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ॥
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥१॥

परं भूय इति । परं ज्ञानं इति व्यवहितेन संबंधः । भूयः पुनः पूर्वेषु सर्वेष्वध्यायेष्वसकृदुक्तमपि प्रवक्ष्यामि । तच्च परं परवस्तुविषयत्वात् । किं तत्, ज्ञानं सर्वेषां ज्ञानानामुत्तमं उत्तमफलत्वात्। ज्ञानानामिति न अमानित्वादीनां, किं तर्हि यज्ञादिज्ञेयवस्तुविषयाणामिति । तानि न मोक्षाय इदं तु मोक्षाय, इति परोत्तमशब्दाभ्यां स्तौति श्रोतृबुद्धिरुच्युत्पादनार्थम् । यज्ज्ञात्वा यज्ज्ञानं ज्ञात्वा प्राप्य मुनयः संन्यासिनो मननशीलाः सर्वे परां सिद्धिं मोक्षाख्यां इतोऽस्माद्देहबंधनादूर्ध्वं गताः प्राप्ताः ॥१॥

अस्याश्च सिद्धेरैकान्तिकत्वं दर्शयति—

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥२॥

इदमिति । इदं ज्ञानं यथोक्तमुपाश्रित्य, ज्ञानसाधनमनुष्ठायेत्येतत्, मम परमेश्वरस्य साधर्म्यं मत्स्वरूपतामागताः प्राप्ता इत्यर्थः न तु समानधर्मता साधर्म्यं क्षेत्रज्ञेश्वरयोर्भेदानभ्युपगमाद्गीताशास्त्रे । फलवादश्चायं स्तुत्यर्थमुच्यते । सर्गेऽपि सृष्टिकालेऽपि नोपजायन्ते नोत्पद्यन्ते, प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्ति च व्यथां नापद्यन्ते न च्यवन्तीत्यर्थः ॥२॥

इत्यादिश्लोकेन । ननु 'देही न लिप्यते' [गी.१३.३१] इत्युक्तं, तत्कथमिह 'निबध्नन्ति' इत्यन्यथोच्यते, परिहृतमस्माभिः इवशब्देन निबध्नन्तीवेति ॥५॥

तत्र सत्त्वादीनां सत्त्वस्यैव तावत् लक्षणमुच्यते—

**तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ॥**
**सुखसंगेन बध्नाति ज्ञानसंगेन चानघ ॥६॥**

तत्र सत्त्वमिति । निर्मलत्वात्स्फटिकमणिरिव प्रकाशकं अनामयं निरुपद्रवं सत्त्वं तन्निबध्नाति । कथं सुखसंगेन सुख्यहमिति विषयभूतस्य सुखस्य विषयिण्यात्मनि संश्लेषापादनं मृषैव सुखे संजनमिति। सैषा अविद्या। न हि विषयधर्मो विषयिणो भवति । इच्छादि च धृत्यंतं क्षेत्रस्यैव विषयस्य धर्म इत्युक्तं भगवता । अतः अविद्ययैव स्वकीयधर्मभूतया विषयविषय्यविवेकलक्षणया अस्वात्मभूते सुखे संजयतीव, आसक्तमिव करोति, असंगं सक्तमिव करोति, असुखिनं सुखिनमिव । तथा ज्ञानसंगेन च । ज्ञानमिति सुखसाहचर्यात्क्षेत्रस्यैव विषयस्य अंतःकरणस्य धर्मो, नात्मनः, आत्मधर्मत्वे संगानुपपत्तेर्बंधानुपपत्तेश्च । सुखे इव ज्ञानादौ संगो मन्तव्यो हेऽनघाव्यसन ॥६॥

**रजो रागात्मकं विद्धि तृष्णाऽऽसंगसमुद्भवम् ॥**
**तन्निबध्नाति कौन्तेय कर्मसंगेन देहिनम् ॥७॥**

रज इति । रजो रागात्मकमिति । रजो रागात्मकं रंजनाद्रागो गैरिकादिवत् रागात्मकं विद्धि जानीहि। तृष्णासंगसमुद्भवं तृष्णा अप्राप्ताभिलाषः, आसंगः प्राप्ते विषये मनसः प्रीतिलक्षणः संश्लेषः, तृष्णाऽऽसंगयोः समुद्भवं तृष्णाऽऽसंगसमुद्भवम् । तन्निबध्नाति तद्रजः निबध्नाति कौन्तेय कर्मसंगेन दृष्टादृष्टार्थेषु कर्मसु संजनं तत्परता कर्मसंगः, तेन निबध्नाति रजो देहिनम् ॥७॥

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।**

**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥८॥**

तमस्त्विति । तमस्तृतीयो गुणः अज्ञानजं अज्ञानाज्जातमज्ञानजं विद्धि मोहनं मोहकरं अविवेककरं सर्वदेहिनां सर्वेषां देहवताम् । प्रमादालस्यनिद्राभिः प्रमादश्च आलस्यं च निद्रा च प्रमादालस्यनिद्राः ताभिः प्रमादालस्यनिद्राभिः तत्तमो निबध्नाति भारत ॥८॥

पुनर्गुणानां व्यापारः संक्षेपत उच्यते—

**सत्त्वं सुखे संजयति रजः कर्मणि भारत ॥**
**ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥९॥**

सत्त्वमिति । सत्त्वं सुखे संजयति संश्लेषयति, रजः कर्मणि हे भारत संजयतीति अनुवर्तते । ज्ञानं सत्त्वकृतं विवेकं आवृत्याच्छाद्य तु तमः स्वेन आवरणात्मना प्रमादे संजयत्युत प्रमादो नाम प्राप्तकर्तव्याकरणम् ॥९॥

उक्तं कार्यं कदा कुर्वन्ति गुणा इत्युच्यते—

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत ॥**
**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥१०॥**

रजस्तम इति । रजस्तमश्च उभावप्यभिभूय सत्त्वं भवत्युद्भवति वर्धते यदा, तदा लब्धात्मकं सत्त्वं स्वकार्यं ज्ञानसुखाद्यारभते हे भारत । तथा रजोगुणः सत्त्वं तमश्चैव उभावप्यभिभूय वर्धते यदा, तदा कर्म कृष्यादि स्वकार्यमारभते । तमआख्यो गुणः सत्त्वं रजश्च उभावप्यभिभूय तथैव वर्धते यदा, तदा ज्ञानावरणादि स्वकार्यमारभते ॥१०॥

यदा यो गुण उद्भूतो भवति तदा तस्य किं लिंगमित्युच्यते—

**सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ॥**
**ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥११॥**

सर्वद्वारेष्विति । सर्वद्वारेषु, आत्मन उपलब्धिद्वाराणि श्रोत्रादीनि सर्वाणि करणानि, तेषु सर्वद्वारेषु अंतःकरणस्य बुद्धेर्वृत्तिः प्रकाशो देहेऽस्मिन् उपजायते । तदेव ज्ञानम् । यदैवं प्रकाशो ज्ञानाख्य उपजायते, तदा

ज्ञानप्रकाशेन लिंगेन विद्याद्विवृद्धमुद्भूतं सत्त्वमित्युतापि ॥११॥

रजस उद्भूतस्येदं चिह्नम्—

**लोभः प्रवृत्तिरारंभः कर्मणामशमः स्पृहा ॥**
**रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥१२॥**

लोभ इति । लोभः परद्रव्यादित्सा, प्रवृत्तिः प्रवर्तनं सामान्यचेष्टा, आरंभः, कस्य, कर्मणाम् । अशमोऽनुपशमः हर्षरागादिप्रवृत्तिः, स्पृहा सर्वसामान्यवस्तुविषया तृष्णा, रजसि गुणे विवृद्धे एतानि लिंगानि जायन्ते हे भरतर्षभ ॥१२॥

**अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ॥**
**तमस्येतानि जायन्ते विवृद्धे कुरुनंदन ॥१३॥**

अप्रकाश इति । अप्रकाशोऽविवेको, अत्यंतमप्रवृत्तिश्च प्रवृत्त्यभावः, तत्कार्यं प्रमादो मोह एव च अविवेको मूढतेत्यर्थः । तमसि गुणे विवृद्धे एतानि लिंगानि जायन्ते हे कुरुनंदन ॥१३॥

मरणद्वारेणापि यत्फलं प्राप्यते तदपि संगरागहेतुकं सर्वं गौणमेवेति दर्शयन्नाह—

**यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ॥**
**तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥१४॥**

यदेति । यदा सत्त्वे प्रवृद्धे उद्भूते तु प्रलयं मरणं याति प्रतिपद्यते देहभृदात्मा, तदोत्तमविदां महदादितत्त्वविदामित्येतत् । लोकानमलान्मलरहितान्प्रतिपद्यते प्राप्नोतीत्येतत् ॥१४॥

**रजसि प्रलयं गत्वा कर्मसंगिषु जायते ॥**
**तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥१५॥**

रजसीति । रजसि गुणे विवृद्धे प्रलयं मरणं गत्वा प्राप्य कर्मसंगिषु कर्मासक्तियुक्तेषु मनुष्येषु जायते । तथा तद्वदेव प्रलीनो मृतस्तमसि विवृद्धे मूढयोनिषु पश्वादियोनिषु जायते ॥१५॥

अतीतश्लोकार्थस्यैव संक्षेप उच्यते—

**कर्मणः सुकृतस्याहुः सात्विकं निर्मलं फलम् ॥**
**रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥१६॥**

कर्मण इति । कर्मणः सुकृतस्य सात्विकस्येत्यर्थः, आहुः शिष्टाः सात्विकमेव निर्मलं फलमिति। रजसस्तु फलं दुःखं राजसस्य कर्मण इत्यर्थः। कर्माधिकारात्फलमपि दुःखमेव कारणानुरूप्याद्राजसमेव । तथा अज्ञानं तमसस्तामसस्य कर्मणो अधर्मस्य पूर्ववत् ॥१६॥

किंच गुणेभ्यो भवति—

**सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ॥**
**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥१७॥**

सत्वादिति । सत्त्वाल्लब्धात्मकात्संजायते समुत्पद्यते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ चोभौ तमसो भवतः, अज्ञानमेव च भवति ॥१७॥

किंच—

**ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ॥**
**जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ॥१८॥**

ऊर्ध्वमिति । ऊर्ध्वं गच्छन्ति देवलोकादिषूत्पद्यन्ते सत्त्वस्थाः सत्त्वगुणवृत्तस्थाः । मध्ये तिष्ठन्ति मनुष्येषूत्पद्यन्ते राजसाः । जघन्यगुणवृत्तस्था जघन्यश्चासौ गुणश्च जघन्यगुणस्तमः तस्य वृत्तं निद्रालस्यादि तस्मिन्स्थिता जघन्यगुणवृत्तस्था मूढा अधो गच्छन्ति पश्वादिषूत्पद्यन्ते तामसाः ॥१८॥

पुरुषस्य प्रकृतिस्थत्वरूपेण मिथ्याज्ञानेन युक्तस्य भोग्येषु गुणेषु सुखदुःखमोहात्मकेषु—सुखी दुःखी मूढोऽहमस्मि—इत्येवंरूपो यः संगः तत्कारणं पुरुषस्य सदसद्योनिजन्मप्राप्तिलक्षणस्य संसारस्येति समासेन पूर्वाध्याये यदुक्तं तदिह 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः' [गी.१४.५५] इत्यत आरभ्य, गुणस्वरूपं, गुणवृत्तं, स्ववृत्तेन च गुणानां बंधकत्वं, गुणवृत्तनिबद्धस्य च पुरुषस्य या गतिः, इत्येतत्सर्वं मिथ्याज्ञानमूलं बंधकारणं विस्तरेणोक्त्वा,

ज्ञानप्रकाशेन लिंगेन विद्याद्विवृद्धमुद्भूतं सत्त्वमित्युतापि ॥११॥

रजस उद्भूतस्येदं चिह्नम्—

**लोभः प्रवृत्तिरारंभः कर्मणामशमः स्पृहा ॥**
**रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥१२॥**

लोभ इति । लोभः परद्रव्यादित्सा, प्रवृत्तिः प्रवर्तनं सामान्यचेष्टा, आरंभः, कस्य, कर्मणाम् । अशमोऽनुपशमः हर्षरागादिप्रवृत्तिः, स्पृहा सर्वसामान्यवस्तुविषया तृष्णा, रजसि गुणे विवृद्धे एतानि लिंगानि जायन्ते हे भरतर्षभ ॥१२॥

**अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ॥**
**तमस्येतानि जायन्ते विवृद्धे कुरुनंदन ॥१३॥**

अप्रकाश इति । अप्रकाशोऽविवेको, अत्यंतमप्रवृत्तिश्च प्रवृत्त्यभावः, तत्कार्यं प्रमादो मोह एव च अविवेको मूढतेत्यर्थः । तमसि गुणे विवृद्धे एतानि लिंगानि जायन्ते हे कुरुनंदन ॥१३॥

मरणद्वारेणापि यत्फलं प्राप्यते तदपि संगरागहेतुकं सर्वं गौणमेवेति दर्शयन्नाह—

**यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ॥**
**तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥१४॥**

यदेति। यदा सत्त्वे प्रवृद्धे उद्भूते तु प्रलयं मरणं याति प्रतिपद्यते देहभृदात्मा, तदोत्तमविदां महदादितत्त्वविदामित्येतत् । लोकानमलान्मलरहितान्प्रतिपद्यते प्राप्नोतीत्येतत् ॥१४॥

**रजसि प्रलयं गत्वा कर्मसंगिषु जायते ॥**
**तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥१५॥**

रजसीति । रजसि गुणे विवृद्धे प्रलयं मरणं गत्वा प्राप्य कर्मसंगिषु कर्मासक्तियुक्तेषु मनुष्येषु जायते । तथा तद्वदेव प्रलीनो मृतस्तमसि विवृद्धे मूढयोनिषु पश्वादियोनिषु जायते ॥१५॥

अतीतश्लोकार्थस्यैव संक्षेप उच्यते—

**कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ॥**
**रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥१६॥**

कर्मण इति । कर्मणः सुकृतस्य सात्त्विकस्येत्यर्थः, आहुः शिष्टाः सात्त्विकमेव निर्मलं फलमिति। रजसस्तु फलं दुःखं राजसस्य कर्मण इत्यर्थः। कर्माधिकारात्फलमपि दुःखमेव कारणानुरूप्याद्राजसमेव । तथा अज्ञानं तमसस्तामसस्य कर्मणो अधर्मस्य पूर्ववत् ॥१६॥

किंच गुणेभ्यो भवति—

**सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ॥**
**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥१७॥**

सत्त्वादिति । सत्त्वाल्लब्धात्मकात्संजायते समुत्पद्यते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ चोभौ तमसो भवतः, अज्ञानमेव च भवति ॥१७॥

किंच—

**ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ॥**
**जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ॥१८॥**

ऊर्ध्वमिति । ऊर्ध्वं गच्छन्ति देवलोकादिषूत्पद्यन्ते सत्त्वस्थाः सत्त्वगुणवृत्तस्थाः । मध्ये तिष्ठन्ति मनुष्येषूत्पद्यन्ते राजसाः । जघन्यगुणवृत्तस्था जघन्यश्चासौ गुणश्च जघन्यगुणस्तमः तस्य वृत्तं निद्रालस्यादि तस्मिन्स्थिता जघन्यगुणवृत्तस्था मूढा अधो गच्छन्ति पश्वादिषूत्पद्यन्ते तामसाः ॥१८॥

पुरुषस्य प्रकृतिस्थत्वरूपेण मिथ्याज्ञानेन युक्तस्य भोग्येषु गुणेषु सुखदुःखमोहात्मकेषु–सुखी दुःखी मूढोऽहमस्मि–इत्येवंरूपो यः संगः तत्कारणं पुरुषस्य सदसद्योनिजन्मप्राप्तिलक्षणस्य संसारस्येति समासेन पूर्वाध्याये यदुक्तं तदिह 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः' [गी.१४.५५] इत्यत आरभ्य, गुणस्वरूपं, गुणवृत्तं, स्ववृत्तेन च गुणानां बंधकत्वं, गुणवृत्तनिबद्धस्य च पुरुषस्य या गतिः, इत्येतत्सर्वं मिथ्याज्ञानमूलं बंधकारणं विस्तरेणोक्त्वा,

अधुना सम्यग्दर्शनान्मोक्षो वक्तव्य इत्यत आह भगवान्—

**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ॥**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥१९॥**

नान्यमिति। नान्यं कार्यकरणविषयाकारपरिणतेभ्यो गुणेभ्यः कर्तारमन्यं यदा द्रष्टा विद्वान्सन्नानुपश्यति, गुणा एव सर्वावस्थाः सर्वकर्मणां कर्तारः इत्येवं पश्यति, गुणेभ्यश्च परं गुणव्यापारसाक्षिभूतं वेत्ति, मद्भावं मम भावं स द्रष्टा अधिगच्छति ॥१९॥

कथमधिगच्छतीत्युच्यते—

**गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ॥**
**जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥२०॥**

गुणानिति। गुणानेतान्यथोक्तान् अतीत्य जीवन्नेवातिक्रम्य मायोपाधिभूतान् त्रीन् देही देहसमुद्भवान्देहोत्पत्तिबीजभूतान्, जन्ममृत्युजरादुःखैः जन्म च मृत्युश्च जरा च दुःखानि च जन्ममृत्युजरादुःखानि तैर्जीवन्नेव विमुक्तः सन्विद्वानमृतमश्नुते। एवं मद्भावमधिगच्छतीत्यर्थः ॥२०॥

जीवन्नेव गुणानतीत्यामृतमश्नुते इति प्रश्नबीजं प्रतिलभ्य अर्जुन उवाच—

अर्जुन उवाच।

**कैर्लिंगैस्त्रीन्गुणानेतानतीतो भवति प्रभो ॥**
**किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥२१॥**

कैर्लिंगैरिति। कैर्लिंगैश्चिह्नैः त्रीनेतान्व्याख्यातान्गुणानतीतोऽतिक्रान्तो भवति प्रभो। किमाचारः कोऽस्याचार इति किमाचारः। कथं केन च प्रकारेण एतान् त्रीन्गुणानतिवर्तते अतीत्य वर्तते ॥२१॥

गुणातीतस्य लक्षणं गुणातीतत्वोपायं चार्जुनेन पृष्टोऽस्मिञ्श्लोके प्रश्नद्वयार्थं प्रतिवचनं भगवान् उवाच—

श्रीभगवानुवाच।

यत्तावत्कैर्लिंगैर्युक्तो गुणातीतो भवतीति तच्छृणु—

**प्रकाशं च प्रवृत्तिं च मोहमेव च पांडव ॥**
**न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ॥२२॥**

प्रकाशमिति । प्रकाशं च सत्त्वकार्यं प्रवृत्तिं च रजःकार्यं मोहमेव च तमःकार्यं इत्येतानि न द्वेष्टि संप्रवृत्तानि सम्यग्विषयभावेन उद्भूतानि । मम तामसः प्रत्ययो जातस्तेनाहं मूढः, तथा राजसी प्रवृत्तिर्ममोत्पन्ना दुःखात्मिका तेनाहं रजसा प्रवर्तितः प्रचलितः स्वरूपात्, कष्टं मम वर्तते योऽयं मत्स्वरूपावस्थानाद्भ्रंशः, तथा सात्त्विको गुणः प्रकाशात्मा मां विवेकित्वमापादयन्सुखे च संजयन्बध्नाति इति तानि द्वेष्ट्यसम्यग्दर्शित्वेन । तदेवं गुणातीतो न द्वेष्टि संप्रवृत्तानि । यथा च सात्त्विकादिपुरुषः सत्त्वादिकार्याण्यात्मानं प्रति प्रकाश्य निवृत्तानि कांक्षति, न तथा गुणातीतो निवृत्तानि कांक्षतीत्यर्थः । एतन्न परप्रत्यक्षं लिंगं, किं तर्हि स्वात्मप्रत्यक्षत्वादात्मविषयमेवैतल्लक्षणम् । न हि स्वात्मविषयं द्वेषमाकांक्षां वा परः पश्यति ॥२२॥

अथेदानीं 'गुणातीतः किमाचारः' इति प्रश्नस्य प्रतिवचनमाह—

**उदासीनवदासीनो गुणैर्यो न विचाल्यते ॥**
**गुणा वर्तन्त इत्येव योऽवतिष्ठति नेंगते ॥२३॥**

उदासीनवदिति । उदासीनवत् यथोदासीनो न कस्यचित्पक्षं भजते, तथायं गुणातीतत्वोपायमार्गेऽवस्थित आसीन आत्मवित् गुणैर्यः संन्यासी न विचाल्यते विवेकदर्शनावस्थातः । तदेतत्स्फुटीकरोति— गुणाः कार्यकरणविषयाकारपरिणता अन्योन्यस्मिन्वर्तन्ते इति योऽवतिष्ठति । छंदोभंगभयात्परस्मैपदप्रयोगः । योऽनुतिष्ठतीति वा पाठान्तरम् । नेंगते न चलति, स्वरूपावस्थ एव भवतीत्यर्थः ॥२३॥

किंच—

**समदुःखसुखः स्वस्थः समलोष्टाश्मकांचनः ॥**

तुल्यप्रियाप्रियो धीरस्तुल्यनिंदात्मसंस्तुतिः ॥२४॥

समदुःखेति । समदुःखसुखः समे दुःखसुखे यस्य स समदुःखसुखः, स्वस्थः स्वे आत्मनि स्थितः प्रसन्नः, समलोष्टाश्मकांचनो लोष्टं चाश्मा च कांचनं च समानि यस्य स समलोष्टाश्मकांचनः, तुल्यप्रियाप्रियः प्रियं च अप्रियं च प्रियाप्रिये तुल्ये समे यस्य सोऽयं तुल्यप्रियाप्रियः, धीरो धीमान्, तुल्यनिंदात्मसंस्तुतिः निंदा च आत्मसंस्तुतिश्च निंदात्मसंस्तुती, तुल्ये निंदात्मसंस्तुती यस्य यतेः स तुल्यनिंदात्मसंस्तुतिः ॥२४॥

किंच—

मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ॥
सर्वारंभपरित्यागी गुणातीतः स उच्यते ॥२५॥

मानेति । मानापमानयोस्तुल्यः समो निर्विकारः, तुल्यो मित्रारिपक्षयोः, यद्यप्युदासीना भवन्ति केचित्स्वाभिप्रायेण तथापि पराभिप्रायेण मित्रारिपक्षयोरिव भवन्तीति तुल्यो मित्रारिपक्षयोरित्याह । सर्वारंभपरित्यागी दृष्टादृष्टार्थानि कर्माण्यारभ्यन्ते इत्यारंभाः सर्वानारंभान्परित्यक्तुं शीलमस्येति सर्वारंभपरित्यागी, देहधारणमात्रनिमित्तव्यतिरेकेण सर्वकर्मपरित्यागीत्यर्थः । गुणातीतः स उच्यते ॥२५॥

'उदासीनवत्' इत्यादि 'गुणातीतः स उच्यते' इत्येतदंतमुक्तं यावद्यत्नसाध्यं तावत्संन्यासिनः अनुष्ठेयं गुणातीतत्वसाधनं मुमुक्षोः, स्थिरीभूतं तु स्वसंवेद्यं सत् गुणातीतस्य यतेर्लक्षणं भवतीति । अधुना 'कथं च त्रीन्गुणानतिवर्तते' [गी.१४.२१] इति प्रश्नस्य प्रतिवचनमाह—

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ॥
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥२६॥

मामिति । मां चेश्वरं नारायणं सर्वभूतहृदयाश्रितं यो यतिः कर्मी वा अव्यभिचारेण न कदाचिद्यो व्यभिचरति भक्तियोगेन भजनं भक्तिः सैव योगस्तेन भक्तियोगेन सेवते, स गुणान्समतीत्यैतान्यथोक्तान् ब्रह्मभूयाय,

भवनं भूयो, ब्रह्मभूयाय ब्रह्मभवनाय मोक्षाय कल्पते समर्थो भवतीत्यर्थः ॥२६॥

कुत एतदित्युच्यते—

**ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥२७॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥१४॥

ब्रह्मण इति । ब्रह्मणः परमात्मनो हि यस्मात्प्रतिष्ठाहं, प्रतितिष्ठत्यस्मिन्निति प्रतिष्ठा, अहं प्रत्यगात्मा । कीदृशस्य ब्रह्मणः? अमृतस्याविनाशिनोऽव्ययस्याविकारिणः शाश्वतस्य च नित्यस्य धर्मस्य धर्मज्ञानस्य ज्ञानयोगधर्मप्राप्यस्य सुखस्य आनंदरूपस्यैकान्तिकस्याव्यभिचारिणः अमृतादिस्वभावस्य परमानंदरूपस्य परमात्मनः प्रत्यगात्मा प्रतिष्ठा, सम्यग्ज्ञानेन परमात्मतया निश्चीयते । तदेतत् 'ब्रह्मभूयाय कल्पते' [गी.१४.२६] इत्युक्तम् । यया चेश्वरशक्त्या भक्तानुग्रहादिप्रयोजनाय ब्रह्म प्रतिष्ठते प्रवर्तते, सा शक्तिर्ब्रह्मैवाहं, शक्तिशक्तिमतोरनन्यत्वादित्यभिप्रायः । अथवा ब्रह्मशब्दवाच्यत्वात्सविकल्पकं ब्रह्म, तस्य ब्रह्मणो निर्विकल्पकोऽहमेव नान्यः प्रतिष्ठा आश्रयः । किंविशिष्टस्य अमृतस्यामरणधर्मकस्य अव्ययस्य व्ययरहितस्य । किंच शाश्वतस्य च नित्यस्य धर्मस्य ज्ञाननिष्ठालक्षणस्य सुखस्य तज्जनितस्यैकान्तिकस्य एकान्तनियतस्य च 'प्रतिष्ठाहं' इति वर्तते ॥२७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥१४॥

---

## अथ पंचदशोऽध्यायः ।

यस्मात् मदधीनं कर्मिणां कर्मफलं ज्ञानिनां च ज्ञानफलं, अतो भक्तियोगेन मां ये सेवन्ते ते मत्प्रसादाज्ज्ञानप्राप्तिक्रमेण गुणातीता मोक्षं गच्छन्ति । किमु वक्तव्यमात्मनस्तत्त्वमेव सम्यग्विजानन्त इत्यतो भगवान् अर्जुनेनापृष्टोऽपि आत्मनस्तत्त्वं विवक्षुरुवाच– उर्ध्वमूलमित्यादिना । तत्र तावत् वृक्षरूपककल्पनया वैराग्यहेतोः संसारस्वरूपं वर्णयति, विरक्तस्य हि संसाराद्भगवत्तत्त्वज्ञानेऽधिकारो, नान्यस्येति—

श्रीभगवानुवाच ।

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ॥
छंदांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥१॥

ऊर्ध्वमूलमिति । ऊर्ध्वमूलं कालतः सूक्ष्मत्वात्कारणत्वान्नित्यत्वान्महत्त्वाच्चोर्ध्वं, उच्यते ब्रह्म अव्यक्तं मायाशक्तिमत्, तन्मूलमस्येति सोऽयं संसारवृक्ष ऊर्ध्वमूलः । श्रुतेश्च–"ऊर्ध्वमूलोऽवाक्शाखः एषोऽश्वत्थः सनातनः" [कठ.६.१] इति । पुराणे च—"अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोच्छ्रितः । बुद्धिस्कंधमयश्चैव इंद्रियांतरकोटरः ॥ महाभूतविशाखश्च विषयैः पत्रवांस्तथा । धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः ॥ आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः । एतद्ब्रह्मवनं चैव ब्रह्माचरति नित्यशः ॥ एतच्छित्वा च भित्वा च ज्ञानेन परमासिना । ततश्चात्मरतिं प्राप्य तस्मान्नावर्तते पुनः" [मभा. अश्व. ४७.१२–१५] इत्यादि । तमूर्ध्वमूलं संसारं मायामयं वृक्षमधःशाखं महदहंकारतन्मात्रादयः शाखा इवास्याधो भवन्तीति सोऽयमधःशाखस्तमधःशाखं, न श्वोऽपि स्थाता इत्यश्वत्थस्तं क्षणप्रध्वंसिनमश्वत्थं प्राहुः कथयन्ति अव्ययं संसारमायायाः अनादिकालप्रवृत्तत्वात्सोऽयं संसारवृक्षोऽव्ययो अनाद्यनंतदेहादिसंतानाश्रयो हि सुप्रसिद्धः, तमव्ययम् । तस्यैव संसारवृक्षस्येदमन्यद्विशेषणं छंदांसि यस्य पर्णानि छंदांसि छादनात् ऋग्यजुःसामलक्षणानि यस्य संसारवृक्षस्य पर्णानीव पर्णानि । यथा वृक्षस्य परिरक्षणार्थानि

पर्णानि, तथा वेदाः संसारवृक्षपरिरक्षणार्था, धर्माधर्मतद्धेतुफलप्रदर्शनार्थत्वात् । यथाव्याख्यातं संसारवृक्षं समूलं यस्तं वेद स वेदवित् वेदार्थविदित्यर्थः । नहि समूलात् संसारवृक्षादस्माज्ज्ञेयोऽन्योऽणुमात्रोऽप्यवशिष्टोऽस्त्यतः सर्वज्ञः सर्ववेदार्थविदिति समूलसंसारवृक्षज्ञानं स्तौति ॥१॥

तस्यैतस्य संसारवृक्षस्यापरा अवयवकल्पनोच्यते—

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखा**
**गुणप्रवृद्धा विषयप्रवालाः ॥**
**अधश्च मूलान्यनुसंततानि**
**कर्मानुबंधीनि मनुष्यलोके ॥२॥**

अधश्चेति । अधो मनुष्यादिभ्यो यावत् स्थावरमूर्ध्वं च यावद्ब्रह्मणः विश्वसृजो धाम इत्येतदंतं यथाकर्म यथाश्रुतं ज्ञानकर्मफलानि, तस्य वृक्षस्य शाखा इव शाखाः प्रसृताः प्रगताः, गुणप्रवृद्धा गुणैः सत्त्वरजस्तमोभिः प्रवृद्धाः स्थूलीकृता उपादानभूतैः, विषयप्रवाला विषयाः शब्दादयः प्रवाला इव देहादिकर्मफलेभ्यः शाखाभ्यः अंकुरीभवन्तीव, तेन विषयप्रवालाः शाखाः । संसारवृक्षस्य परममूलमुपादानं कारणं पूर्वमुक्तम् । अथेदानीं कर्मफलजनितरागद्वेषादिवासनाः मूलानीव धर्माधर्मप्रवृत्तिकारणानि अवान्तरभावीनि तान्यधश्च देहाद्यपेक्षया मूलान्यनुसंततान्यनुप्रविष्टानि कर्मानुबंधीनि कर्म धर्माधर्मलक्षणं अनुबंधः पश्चाद्भावी, येषामुद्भूतिमनूद्भवति तानि कर्मानुबंधीनि मनुष्यलोके विशेषतः । अत्र हि मनुष्याणां कर्माधिकारः प्रसिद्धः ॥२॥

यस्त्वयं वर्णितः संसारवृक्षः—

**न रूपमस्येह तथोपलभ्यते**
**नांतो न चादिर्न च संप्रतिष्ठा ॥**
**अश्वत्थमेनं सुविरूढमूल-**
**मसंगशस्त्रेण दृढेन छित्त्वा ॥३॥**

न रूपमिति। न रूपमस्येह यथा उपवर्णितं तथा नैवोपलभ्यते, स्वप्नमरीच्युदकमायागंधर्वनगरसमत्वात्, दृष्टनष्टस्वरूपो हि स इत्यत एव नांतो न पर्यंतो निष्ठा परिसमाप्तिर्वा विद्यते। तथा न चादिः, इत आरभ्यायं प्रवृत्त इति न केनचिद्गम्यते। न च संप्रतिष्ठा स्थितिर्मध्यं अस्य न केनचिदुपलभ्यते। अश्वत्थमेनं यथोक्तं सुविरूढमूलं सुष्ठु विरूढानि विरोहं गतानि सुदृढानि मूलानि यस्य तमेनं सुविरूढमूलं, असंगशस्त्रेण असंगः पुत्रवित्तलोकैषणादिभ्यो व्युत्थानं तेनासंगशस्त्रेण दृढेन परमात्माभिमुख्यनिश्चयदृढीकृतेन पुनःपुनर्विवेकाभ्यासाश्मनिशितेन च्छित्त्वा संसारवृक्षं सबीजमुद्धृत्य ॥३॥

ततः पदं तत्परिमार्गितव्यं
यस्मिन्गता न निवर्तन्ति भूयः ॥
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥४॥

तत इति। ततः पश्चात् पदं वैष्णवं तत्परिमार्गितव्यं, परिमार्गणमन्वेषणं, ज्ञातव्यमित्यर्थः। यस्मिन्पदे गताः प्रविष्टा न निवर्तन्ति नावर्तन्ते भूयः पुनः संसाराय। कथं परिमार्गितव्यमित्याह– तमेव च यः पदशब्देनोक्तः आद्यमादौ भवं पुरुषं प्रपद्ये इत्येवं परिमार्गितव्यं तच्छरणतयेत्यर्थः। कोऽसौ पुरुष इत्युच्यते यतो यस्मात्पुरुषात्संसारमायावृक्षप्रवृत्तिः प्रसृता निःसृता, ऐंद्रजालिकादिव माया, पुराणी चिरंतनी ॥४॥

कथंभूतास्तत्पदं गच्छन्तीत्युच्यते—

निर्मानमोहा जितसंगदोषा
अध्यात्मनित्या विनिवृत्तकामाः ॥
द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥५॥

निर्मानमोहा इति। निर्मानमोहा मानश्च मोहश्च मानमोहौ तौ

निर्गतौ येभ्यस्ते निर्मानमोहा मानमोहवर्जिताः, जितसंगदोषाः संग एव दोषः संगदोषो जितः संगदोषो यैस्ते जितसंगदोषाः, अध्यात्मनित्याः परमात्मस्वरूपालोचननित्यास्तत्पराः, विनिवृत्तकामाः विशेषतो निर्लेपेन निवृत्ताः कामा येषां ते विनिवृत्तकामाः यतयः संन्यासिनो द्वंद्वैः प्रिया-प्रियादिभिर्विमुक्ताः सुखदुःखसंज्ञैः परित्यक्ता गच्छन्ति अमूढा मोहवर्जिताः पदमव्ययं तद्यथोक्तम् ॥५॥

तदेव पदं पुनर्विशिष्यते—

**न तद्भासयते सूर्यो न शशांको न पावकः ॥**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥६॥**

न तादिति । तद्धामेति व्यवहितेन धाम्ना संबध्यते । तत् धाम तेजोरूपं पदं न भासयते सूर्य आदित्यः सर्वावभासनशक्तिमत्त्वेऽपि सति । तथा न शशांकः चंद्रो, न पावको नाग्निरपि । यद्धाम वैष्णवं पदं गत्वा प्राप्य न निवर्तन्ते, यच्च सूर्यादिर्न भासयते, तद्धाम पदं परमं मम विष्णोः यद्गत्वा न निवर्तन्ते इत्युक्तम् ॥६॥

ननु सर्वा हि गतिरागत्यन्ता 'संयोगा विप्रयोगान्ताः' इति हि प्रसिद्धम् । कथमुच्यते तद्धामगतानां नास्ति निवृत्तिरिति, शृणु तत्र कारणम्—

**ममैवांशो जीवलोके जीवभूतः सनातनः ॥**
**मनःषष्ठानींद्रियाणि प्रकृतिस्थानि कर्षति ॥१७॥**

ममेति । ममैव परमात्मनः नारायणस्य, अंशो भागोऽवयव एकदेश इत्यनर्थान्तरं जीवलोके जीवानां लोके संसारे जीवभूतो कर्ता भोक्ता इति प्रसिद्धः सनातनः चिरंतनः । यथा जलसूर्यकः सूर्यांशो जलनिमित्तापाये सूर्यमेव गत्वा न निवर्तते तेनैवात्मना संगच्छत्येवमेव; यथा वा घटाद्युपाधि-परिच्छिन्नो घटाद्याकाशः आकाशांशः सन् घटादिनिमित्तापाये आकाशं प्राप्य न निवर्तते । अतः उपपन्नमुक्तं 'यद्गत्वा न निवर्तन्ते' [गी. १५.६] इति । ननु निरवयवस्य परमात्मनः कुतोऽवयव एकदेशोंऽश इति ।

सावयवत्वे च विनाशप्रसंगोऽवयवविभागात् । नैष दोषोऽविद्याकृतोपाधिपरिच्छिन्न एकदेशोंऽश इव कल्पितो यतः । दर्शितश्चायमर्थः क्षेत्राध्याये विस्तरशः । स च जीवो मदंशत्वेन कल्पितः कथं संसरत्युत्क्रामति च इत्युच्यते– मनःषष्ठानींद्रियाणि श्रोत्रादीनि प्रकृतिस्थानि स्वस्थाने कर्णशष्कुल्यादौ प्रकृतौ स्थितानि कर्षत्याकर्षति ॥७॥

कस्मिन्काले—

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ॥**
**गृहीत्वैतानि संयाति वायुर्गंधानिवाशयात् ॥८॥**

शरीरमिति । यच्चापि यदा चाप्युत्क्रामति ईश्वरो देहादिसंघातस्वामी जीवः तदा कर्षतीति श्लोकस्य द्वितीयपादोऽर्थवशात्प्राथम्येन संबध्यते । यदा च पूर्वस्माच्छरीराच्छरीरान्तरमवाप्नोति तदा गृहीत्वैतानि मनःषष्ठानींद्रियाणि संयाति सम्यग्याति गच्छति । किमिवेत्याह वायुः पवनो गंधानिव आशयात्पुष्पादेः ॥८॥

कानि पुनस्तानीति—

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ॥**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥९॥**

श्रोत्रमिति । श्रोत्रं चक्षुः स्पर्शनं च त्वगिंद्रियं रसनं घ्राणमेव च मनश्च षष्ठं प्रत्येकमिंद्रियेण सह अधिष्ठाय देहस्थो विषयाञ्शब्दादीनुपसेवते ॥९॥

एवं देहगतं देहात्—

**उत्क्रामन्तं स्थितं वापि भुंजानं वा गुणान्वितम् ॥**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥१०॥**

उत्क्रामन्तमिति । उत्क्रामन्तं देहं पूर्वोपात्तं परित्यजन्तं स्थितं वापि देहे तिष्ठन्तं भुंजानं वा शब्दादींश्चोपलभमानं गुणान्वितं सुखदुःखमोहाद्यैर्गुणैरन्वितमनुगतं संयुक्तमित्यर्थः । एवंभूतमप्येनं अत्यंतदर्शनगोचरप्राप्तं विमूढा दृष्टादृष्टविषयभोगबलाकृष्टचेतस्तया अनेकधा मूढा नानुपश्यन्ति,

अहो कष्टं वर्तते इत्यनुक्रोशति च भगवान् । ये तु पुनः प्रमाणजनित-ज्ञानचक्षुषः ते एनं पश्यन्ति ज्ञानचक्षुषो विविक्तदृष्टय इत्यर्थः ॥१०॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ॥
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥११॥

यतन्त इति । यतन्तः प्रयत्नं कुर्वन्तो योगिनश्च समाहितचित्ता एनं प्रकृतमात्मानं पश्यन्ति अयमहमस्मीत्युपलभन्ते आत्मनि स्वस्यां बुद्धौ अवस्थितम् । यतन्तोऽपि शास्त्रादिप्रमाणैः, अकृतात्मानोऽसंस्कृतात्मानस्तपसेंद्रियजयेन च, दुश्चरितादनुपरता, अशान्तदर्पाः, प्रयत्नं कुर्वन्तोऽपि नैनं पश्यन्त्यचेतसोऽविवेकिनः ॥११॥

यत्पदं सर्वस्यावभासकमप्यग्न्यादित्यादिकं ज्योतिर्नावभासयते, यत्प्रासाश्च मुमुक्षवः पुनः संसाराभिमुखा न निवर्तन्ते, यस्य च पदस्योपाधिभेदमनु विधीयमाना जीवा—घटाकाशादय इवाकाशस्य—अंशाः, तस्य पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वं च विवक्षुश्चतुर्भिः श्लोकैर्विभूतिसंक्षेपमाह भगवान्—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥
यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥१२॥

यदादित्येति । यदादित्यगतमादित्याश्रयं, किं तत्तेजो दीप्तिः प्रकाशो जगद्भासयते प्रकाशयत्यखिलं समस्तं, यच्चंद्रमसि शशभृति तेजोऽवभासकं वर्तते, यच्चाग्नौ हुतवहे, तत्तेजो विद्धि विजानीहि मामकं मदीयं मम विष्णोस्तज्ज्योतिः । अथवा आदित्यगतं तेजश्चैतन्यात्मकं ज्योतिः, यच्चंद्रमसि यच्चाग्नौ वर्तते तत्तेजो विद्धि मामकं मदीयं मम विष्णोस्तज्ज्योतिः ॥

ननु स्थावरेषु जंगमेषु च तत्समानं चैतन्यात्मकं ज्योतिः । तत्र कथमिदं विशेषणं यदादित्यगतमित्यादि । नैष दोषः, सत्त्वाधिक्यादाविस्तरत्वोपपत्तेः । आदित्यादिषु हि सत्त्वमत्यंतप्रकाशमत्यंतभास्वरं अतस्तत्रैव आविस्तरं ज्योतिरिति तद्विशिष्यते, न तु तत्रैव तदधिकमिति । यथा हि लोके तुल्येऽपि मुखसंस्थाने न काष्ठकुड्यादौ मुखमाविर्भवति, आदर्शादौ तु स्वच्छे

स्वच्छतरे च तारतम्येनाविर्भवति तद्वत् ॥१२॥

किंच—

गामाविश्य च भूतानि धारयाम्यहमोजसा ॥
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥१३॥

गामिति । गां पृथिवीमाविश्य प्रविश्य धारयामि भूतानि जगदहमोजसा बलेन, यद्बलं कामरागविवर्जितमैश्वरं रूपं जगद्विधारणाय पृथिव्यां आविष्टं येन गुर्वी पृथिवी नाध. पतति न विदीर्यते च । तथा च मंत्रवर्णः— "येन द्यौरुग्रा पृथिवी च दृढा" [तै.सं.४.१.८] इति, "स दाधार पृथिवीम्" [तै.सं.४.१.८] इत्यादिश्च । अतो गामाविश्य च भूतानि चराचराणि धारयामीति युक्तमुक्तम् । किंच पृथिव्यां जाता ओषधीः सर्वा व्रीहियवाद्याः पुष्णामि पुष्टिमतीः रसस्वादुमतीश्च करोमि सोमो भूत्वा रसात्मकः सोमः सन् रसात्मको रसस्वभावः । सर्वरसानामाकरः सोमः, स हि सर्वा ओषधीः स्वात्मरसानुप्रवेशयन् पुष्णाति ॥१३॥

किंच—

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥१४॥

अहमिति । अहमेव वैश्वानर उदरस्थोऽग्निर्भूत्वा "अयमग्निर्वैश्वानरो योऽयमंतः पुरुषे येनेदमन्नं पच्यते" [ ] इत्यादिश्रुतेर्वैश्वानरः सन्प्राणिनां प्राणवतां देहमाश्रितः प्रविष्टः प्राणापानसमायुक्तः प्राणापानाभ्यां समायुक्तः संयुक्तः पचामि पक्तिं करोमि अन्नं अशनं चतुर्विधं चतुष्प्रकारं भोज्यं भक्ष्यं चोष्यं लेह्यं च । भोक्ता वैश्वानरोऽग्निः, भोज्यमन्नं सोमः, तदेतदुभयमग्नीषोमौ सर्वं इति पश्यतोऽन्नदोषलेपो न भवति ॥१४॥

किंच—

सर्वस्य चाहं हृदि संनिविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ॥

वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥१५॥

सर्वस्येति । सर्वस्य प्राणिजातस्याहमात्मा सन् हृदि बुद्धौ संनिविष्टः । अतो मत्त आत्मनः सर्वप्राणिनां स्मृतिर्ज्ञानं तदपोहनं अपगमनं च । येषां यथा पुण्यकर्मणां पुण्यकर्मानुरोधेन ज्ञानस्मृती भवतः, तथा पापकर्मणां पापकर्मानुरूपेण स्मृतिज्ञानयोरपोहनं च अपायनमपगमनं च । वेदैश्च सर्वैरहमेव परमात्मा वेद्यो वेदितव्यः । वेदान्तकृद्वेदान्तार्थसंप्रदायकृदित्यर्थः । वेदविद्वेदार्थविदेव चाहम् ॥१५॥

भगवतः ईश्वरस्य नारायणाख्यस्य विभूतिसंक्षेप उक्तो विशिष्टोपाधिकृतो 'यदादित्यगतं तेजः' [गी.१५.१२] इत्यादिना । अथाधुना तस्यैव क्षराक्षरोपाधिप्रविभक्ततया निरुपाधिकस्य केवलस्य स्वरूपनिर्दिधारयिषया उत्तरे श्लोका आरभ्यन्ते । तत्र सर्वमेव अतीतानागताध्यायार्थजातं त्रिधा राशीकृत्याह—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ॥
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥१६॥

द्वाविमाविति । द्वाविमौ पृथग्राशीकृतौ पुरुषावित्युच्येते लोके संसारे । क्षरश्च क्षरतीति क्षरो विनाशीति एको राशिः, अपरः पुरुषोऽक्षरस्तद्विपरीतो, भगवतो मायाशक्तिः, क्षराख्यस्य पुरुषस्योत्पत्तिबीजं अनेकसंसारिजंतुकामकर्मादिसंस्काराश्रयः अक्षरः पुरुष उच्यते । कौ तौ पुरुषावित्याह स्वयमेव भगवान्—क्षरः सर्वाणि भूतानि समस्तं विकारजातमित्यर्थः । कूटस्थः कूटो राशी राशिरिव स्थितः । अथवा कूटो माया वंचना जिह्मता कुटिलतेति पर्यायाः, अनेकमायावंचनादिप्रकारेण स्थितः कूटस्थः, संसारबीजानंत्यान्न क्षरतीत्यक्षर उच्यते ॥१६॥

आभ्यां क्षराक्षराभ्यां अन्यो विलक्षणः क्षराक्षरोपाधिद्वयदोषेणास्पृष्टो नित्यशुद्धबुद्धमुक्तस्वभावः—

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥१७॥

उत्तम इति । उत्तम उत्कृष्टतमः पुरुषस्त्वन्योऽत्यंतविलक्षण आभ्यां परमात्मेति परमश्चासौ देहाद्यविद्याकृतात्मभ्यः, आत्मा च सर्वभूतानां प्रत्यक्चेतनः, इत्यतः परमात्मेत्युदाहृत उक्तो वेदान्तेषु । स एव विशेष्यते यो लोकत्रयं भूर्भुवःस्वराख्यं स्वकीयया चैतन्यबलशक्त्या आविश्य प्रविश्य बिभर्ति स्वरूपसद्भावमात्रेण बिभर्ति धारयति; अव्ययो नास्य व्ययो विद्यते इत्यव्ययः। कः, ईश्वरः सर्वज्ञो नारायणाख्यः ईशनशीलः ॥१७॥

यथाव्याख्यातस्येश्वरस्य पुरुषोत्तम इत्येतन्नाम प्रसिद्धम्। तस्य नामनिर्वचनप्रसिद्धया अर्थवत्त्वं नाम्नो दर्शयन् निरतिशयोऽहमीश्वर इत्यात्मानं दर्शयति भगवान्—

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥१८॥

यस्मादिति । यस्मात्क्षरमतीतोऽहं संसारमायावृक्षमश्वत्थाख्यमतिक्रान्तोऽहमक्षरादपि संसारमायावृक्षबीजभूतादपि चोत्तमः उत्कृष्टतमः ऊर्ध्वतमो वा, अतः ताभ्यां क्षराक्षराभ्यामुत्तमत्वादस्मि लोके वेदे च प्रथितः प्रख्यातः । पुरुषोत्तम इत्येवं मां भक्तजना विदुः । कवयः काव्यादिषु च इदं नाम निबध्नन्ति, पुरुषोत्तम इत्यनेनाभिधानेनाभिगृणन्ति ॥१८॥

अथेदानीं यथानिरुक्तमात्मानं यो वेद तस्येदं फलमुच्यते—

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ॥
स सर्वविद्भजति मां सर्वभावेन भारत ॥१९॥

य इति । यो मामीश्वरं यथोक्तविशेषणमेवं यथोक्तेन प्रकारेण असंमूढः संमोहवर्जितः सन् जानात्ययमहमस्मीति पुरुषोत्तमं, स सर्ववित्सर्वात्मना सर्वं वेत्तीति सर्वज्ञः सर्वभूतस्थं भजति मां सर्वभावेन सर्वात्मतया हे भारत ॥१९॥

अस्मिन्नध्याये भगवत्तत्त्वज्ञानं मोक्षफलमुक्त्वा अथेदानीं तत्स्तौति—

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ॥
एतत् बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥२०॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुरुषोत्तमयोगो नाम पंचदशोऽध्यायः ॥१५॥

इतीति । इत्येतत् गुह्यतमं गोप्यतमं अत्यंतरहस्यमित्येतत् । किं तत्? शास्त्रम् । यद्यपि गीताख्यं समस्तं शास्त्रमुच्यते, तथापि अयमेवाध्याय इह शास्त्रमित्युच्यते स्तुत्यर्थं प्रकरणात् । सर्वो हि गीताशास्त्रार्थोऽस्मिन्नध्याये समासेनोक्तः न केवलं गीताशास्त्रार्थ एव, किंतु सर्वश्च वेदार्थः इह परिसमाप्तः । 'यस्तं वेद स वेदवित्' [गी.१५.१], 'वेदैश्च सर्वैरहमेव वेद्यः' [गी.१५.१५] इति चोक्तम् । इदमुक्तं कथितं मया हेऽनघापाप । एतच्छास्त्रं यथादर्शितार्थं बुद्ध्वा बुद्धिमान्स्याद्भवेन्नान्यथा, कृतकृत्यश्च भारत, कृतं कृत्यं कर्तव्यं येन स कृतकृत्यो, विशिष्टजन्मप्रसूतेन ब्राह्मणेन यत्कर्तव्यं तत्सर्वं भगवत्तत्त्वे विदिते कृतं भवेदित्यर्थः । न चान्यथा कर्तव्यं परिसमाप्यते कस्यचिदित्यभिप्रायः । 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' [गी. ४.३३] इति चोक्तम् । "एतद्धि जन्मसाफल्यं ब्राह्मणस्य विशेषतः । प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा" [मनु.१२.९३], इति च मानवं वचनम् । यत एतत्परमार्थतत्त्वं मत्तः श्रुतवानसि, अतः कृतार्थस्त्वं भारतेति ॥२०॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये पुरुषोत्तमयोगो नाम पंचदशोऽध्यायः ॥१५॥

---

## अथ षोडशोऽध्यायः ।

दैवी आसुरी राक्षसी चेति प्राणिनां प्रकृतयो नवमेऽध्याये सूचिताः। तासां विस्तरेण प्रदर्शनाय 'अभयं सत्त्वसंशुद्धिः' इत्यादिरध्याय आरभ्यते। तत्र संसारमोक्षाय दैवी प्रकृतिः, निबंधाय आसुरी राक्षसी चेति दैव्याः आदानाय प्रदर्शनं क्रियते, इतरयोः परिवर्जनाय च—

श्रीभगवानुवाच ।

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ॥**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥१॥**

अभयमिति। अभयमभीरुता, सत्त्वसंशुद्धिः सत्त्वस्य अंतःकरणस्य संशुद्धिः संव्यवहारेषु परवंचनमायानृतादिपरिवर्जनं शुद्धसत्त्वभावेन व्यवहार इत्यर्थः ज्ञानयोगव्यवस्थितिः ज्ञानं शास्त्रतः आचार्यतश्च आत्मादिपदार्थानामवगमो अवगतानामिंद्रियाद्युपसंहारेणैकाग्रतया स्वात्मसंवेद्यतापादनं योगः, तयोर्ज्ञानयोगयोर्व्यवस्थितिर्व्यवस्थानं तन्निष्ठता। एषा प्रधाना दैवी सात्त्विकी संपत्। यत्र च येषामधिकृतानां या प्रकृतिः संभवति, सात्त्विकी सोच्यते। दानं यथाशक्ति संविभागोऽन्नादीनां, दमश्च बाह्यकरणानामुपशमः, अंतःकरणस्योपशमं शान्तिं वक्ष्यति, यज्ञश्च श्रौतोऽग्निहोत्रादिः, स्मार्तश्च देवयज्ञादिः, स्वाध्याय ऋग्वेदाद्यध्ययनमदृष्टार्थं, तपो वक्ष्यमाणं शारीरादि, आर्जवमृजुत्वं सर्वदा ॥१॥

किंच—

**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ॥**
**दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥२॥**

अहिंसेति। अहिंसा अहिंसनं प्राणिनां पीडावर्जनं, सत्यमप्रियानृतवर्जितं यथाभूतार्थवचनम्, अक्रोधः परैराक्रुष्टस्याभिहतस्य वा प्राप्तस्य क्रोधस्योपशमनं, त्यागः संन्यासः पूर्वं दानस्योक्तत्वात्, शान्तिरंतःकरणस्योपशमः, अपैशुनमपिशुनता, परस्मै पररंध्रप्रकटीकरणं पैशुनं तदभावोऽपैशुनं, दया

कृपा भूतेषु दुःखितेषु, अलोलुप्त्वमिंद्रियाणां विषयसंनिधौ अविक्रिया, मार्दवं मृदुता अक्रौर्यं, ह्रीर्लज्जा, अचापलमसति प्रयोजने वाक्पाणिपादादीनामव्यापारयितृत्वम् ॥२॥

किंच—

तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ॥
भवन्ति संपदं दैवीमभिजातस्य भारत ॥३॥

तेज इति । तेजः प्रागल्भ्यं न त्वग्गता दीप्तिः, क्षमा आक्रुष्टस्य ताडितस्य वा अंतर्विक्रियानुत्पत्तिः, उत्पन्नायां विक्रियायां उपशमनमक्रोध इत्यवोचाम । इत्थं क्षमाया अक्रोधस्य च विशेषः । धृतिर्देहेंद्रियेष्ववसादं प्राप्तेषु तस्य प्रतिषेधकोऽन्तःकरणवृत्तिविशेषो येनोत्तंभितानि करणानि देहश्च नावसीदन्ति, शौचं द्विविधं मृजलकृतं बाह्यमाभ्यंतरं च मनोबुद्ध्योर्नैर्मल्यं मायारागादिकालुष्याभावः, एवं द्विविधं शौचम् । अद्रोहः परजिघांसाभावो अहिंसनम् । नातिमानिता अत्यर्थं मानोऽतिमानः स यस्य विद्यते सोऽतिमानी, तद्भावोऽतिमानिता, तदभावो नातिमानिता आत्मनः पूज्यतातिशयभावनाभाव इत्यर्थः । भवन्त्यभयादीन्येतदंतानि संपदमभिजातस्य । किंविशिष्टां संपदं? दैवीं देवानां या संपत् तां अभिलक्ष्य जातस्य देवविभूत्यर्हस्य भाविकल्याणस्येत्यर्थो, हे भारत ॥३॥

अथेदानीमासुरी संपदुच्यते—

दंभो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च ॥
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥४॥

दंभ इति । दंभो धर्मध्वजित्वं, दर्पो विद्याधनस्वजनादिनिमित्त उत्सेकः, अतिमानः पूर्वोक्तः, क्रोधश्च, पारुष्यमेव च परुषवचनं—यथा काणं चक्षुष्मान्, विरूपं रूपवान्, हीनाभिजनमुत्तमाभिजन इत्यादि । अज्ञानं च अविवेकज्ञानं कर्तव्याकर्तव्यादिविषयमिथ्याप्रत्ययः । अभिजातस्य पार्थ । किमभिजातस्येत्याह—संपदं आसुरीं असुराणां संपदासुरी ताम्-

भिजातस्येत्यर्थः ॥४॥

अनयोः संपदोः कार्यमुच्यते—

**दैवी संपद्विमोक्षाय निबंधायासुरी मता ॥**
**मा शुचः संपदं दैवीमभिजातोऽसि पांडव ॥५॥**

दैवीति। दैवी संपद्या सा विमोक्षाय संसारबंधनात्। निबंधाय नियतो बंधो निबंधः तदर्थमासुरी संपन्मताभिप्रेता। तथा राक्षसी च। तत्रैवमुक्तेऽर्जुनस्यान्तर्गतं भावं 'किमहमासुरसंपद्युक्तः किंवा दैवसंपद्युक्तः' इत्येवमालोचनारूपमालक्ष्याह भगवान्—मा शुचः शोकं मा कार्षीः, संपदं दैवीमभिजातोऽस्यभिलक्ष्य जातोऽसि, भाविकल्याणस्त्वमसीत्यर्थो, हे पांडव ॥५॥

**द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ॥**
**दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥६॥**

द्वाविति। द्वौ द्विसंख्याकौ भूतसर्गौ भूतानां मनुष्याणां सर्गौ सृष्टी भूतसर्गौ सृज्येते इति सर्गौ भूतान्येव सृज्यमानानि दैवासुरसंपद्द्वययुक्तानि द्वौ भूतसर्गावित्युच्येते "द्वया ह वै प्राजापत्या देवाश्चासुराश्च" [ ] इति श्रुतेः। लोकेऽस्मिन्संसारे इत्यर्थः सर्वेषां द्वैविध्योपपत्तेः। कौ तौ भूतसर्गावित्युच्येते प्रकृतावेव दैव आसुर एव च। उक्तयोरेव पुनरनुवादे प्रयोजनमाह दैवो भूतसर्गः 'अभयं सत्त्वसंशुद्धिः' [गी.१६.१] इत्यादिना विस्तरशो विस्तरप्रकारैः प्रोक्तः कथितो, न त्वासुरो विस्तरशः, अतस्तत्परिवर्जनार्थमासुरं पार्थ मे मम वचनादुच्यमानं विस्तरशः शृण्ववधारय ॥६॥

आ अध्यायपरिसमाप्तेरासुरी संपत्प्राणिविशेषणत्वेन प्रदर्श्यते प्रत्यक्षीकरणेन च शक्यते तस्याः परिवर्जनं कर्तुमिति—

**प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ॥**
**न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥७॥**

प्रवृत्तिमिति। प्रवृत्तिं च प्रवर्तनं यस्मिन्पुरुषार्थसाधने कर्तव्ये प्रवृत्तिस्तां, निवृत्तिं च एतद्विपरीतां यस्मादनर्थहेतोर्निवर्तितव्यं सा निवृत्तिस्तां

च, जना आसुरा न विदुर्न जानन्ति । न केवलं प्रवृत्तिनिवृत्ती एव ते न विदुः, न शौचं नापि चाचारो न सत्यं तेषु विद्यते । अशौचा अनाचारा मायाविनः अनृतवादिनो ह्यासुराः ॥७॥

किंच—

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥८॥

असत्यमिति । असत्यं यथा वयमनृतप्रायास्तथेदं जगत्सर्वमसत्यं, अप्रतिष्ठं च नास्य धर्माधर्मौ प्रतिष्ठा अतोऽप्रतिष्ठं च, इति ते आसुरा जना जगदाहुः, अनीश्वरं न च धर्माधर्मसव्यपेक्षकोऽस्य शासितेश्वरो विद्यते इत्यतोऽनीश्वरं जगदाहुः । किं च अपरस्परसंभूतं कामप्रयुक्तयोः स्त्रीपुरुषयोरन्योन्यसंयोगाज्जगत्सर्वं संभूतम् । किमन्यत्कामहैतुकं कामहेतुकमेव कामहैतुकम् । किमन्यज्जगतः कारणं! न किंचिददृष्टं धर्माधर्मादि कारणान्तरं विद्यते जगतः काम एव प्राणिनां कारणमिति लोकायतिकदृष्टिरियम् ॥८॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ॥
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥९॥

एतामिति । एतां दृष्टिमवष्टभ्याश्रित्य नष्टात्मानो नष्टस्वभावा विभ्रष्टपरलोकसाधना अल्पबुद्धयो विषयविषया अल्पैव बुद्धिर्येषां तेऽल्पबुद्धयः प्रभवन्त्युद्भवन्त्युग्रकर्माणः क्रूरकर्माणो हिंसात्मकाः । क्षयाय जगतः प्रभवन्तीति संबंधः । जगतोऽहिताः शत्रव इत्यर्थः ॥९॥

ते च—

काममाश्रित्य दुष्पूरं दंभमानमदान्विताः ॥
मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥१०॥

काममिति । काममिच्छाविशेषमाश्रित्यावष्टभ्य दुष्पूरमशक्यपूरणं दंभमानमदान्विता दंभश्च मानश्च मदश्च दंभमानमदास्तैरन्विता दंभमानमदान्विता मोहादविवेकतो गृहीत्वोपादाय असद्ग्राहानशुभनिश्चयान्प्रवर्तन्ते

लोके अशुचिव्रता अशुचीनि व्रतानि येषां तेऽशुचिव्रताः ॥१०॥

किंच—

**चिंतामपरिमेयां च प्रलयान्तामुपाश्रिताः ॥**
**कामोपभोगपरमा एतावदिति निश्चिताः ॥११॥**

चिंतामिति । चिंतामपरिमेयां च, न परिमातुं शक्यते यस्याश्चिंताया इयत्ता सा अपरिमेया तामपरिमेयां प्रलयान्तां मरणान्तामुपाश्रिताः, सदा चिंतापरा इत्यर्थः । कामोपभोगपरमाः, काम्यन्ते इति कामाः विषयाः शब्दादयस्तदुपभोगपरमाः, अयमेव परमः पुरुषार्थो यः कामोपभोग इत्येवं-निश्चितात्मानः, एतावदिति निश्चिताः ॥११॥

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ॥**
**ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥१२॥**

आशापाशेति । आशापाशशतैः आशा एव पाशास्तच्छतैराशापाशशतैः बद्धा नियंत्रिताः सन्तः सर्वत आकृष्यमाणाः, कामक्रोधपरायणाः कामक्रोधौ परमयनं पर आश्रयो येषां ते कामक्रोधपरायणाः, ईहन्ते चेष्टन्ते कामभोगार्थं कामभोगप्रयोजनाय न धर्मार्थं, अर्थसंचयानर्थप्रचयान् अन्यायेन परस्वापहरणादिनेत्यर्थः ॥१२॥

ईदृशश्च तेषामभिप्रायः—

**इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ॥**
**इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥१३॥**

इदमिति । इदं द्रव्यमत्रेदानीं मया लब्धं, इदमन्यत्प्राप्स्ये मनोरथं मनस्तुष्टिकरं, इदं चास्तीदमपि मे भविष्यत्यागामिनि संवत्सरे पुनर्धनं तेनाहं धनी विख्यातो भविष्यामि इति ॥१३॥

**असौ मया हतः शत्रुर्हनिष्ये चापरानपि ॥**
**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥१४॥**

असौ मयेति । असौ देवदत्तनामा मया हतो दुर्जयः शत्रुः, हनिष्ये

चापरानन्यान्वराकानपि किमेते करिष्यन्ति तपस्विनः; सर्वथापि नास्ति मत्तुल्यः । ईश्वरोऽहमहं भोगी । सर्वप्रकारेण च सिद्धोऽहं संपन्नः पुत्रैः पौत्रैर्नप्तृभिः, न केवलं मानुषोऽहं बलवान्सुखी चाहमेव, अन्ये तु भूमिभारायावतीर्णाः ॥१४॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥१५॥

आढ्य इति । आढ्यो धनेन, अभिजनवान्सप्तपुरुषं श्रोत्रियत्वादिसंपन्नः, तेनापि न मम तुल्योऽस्ति कश्चित् । कोऽन्योऽस्ति सदृशस्तुल्यो मया । किंच यक्ष्ये यागेनाप्यन्यानभिभविष्यामि, दास्यामि नटादिभ्यो, मोदिष्ये हर्षं चातिशयं प्राप्स्यामि, इत्येवं अज्ञानविमोहिता अज्ञानेन विमोहिता विविधमविवेकभावमापन्नाः ॥१५॥

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ॥
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥१६॥

अनेकेति । अनेकचित्तविभ्रान्ता उक्तप्रकारैरनेकैश्चित्तैर्विविधं भ्रान्ता अनेकचित्तविभ्रान्ता, मोहजालसमावृता मोहोऽविवेकोऽज्ञानं तदेव जालमिव आवरणात्मकत्वात्, तेन समावृताः, प्रसक्ताः कामभोगेषु तत्रैव निषण्णाः सन्तः तेनोपचितकल्मषाः पतन्ति नरकेऽशुचौ वैतरण्यादौ ॥१६॥

आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ॥
यजन्ते नामयज्ञैस्ते दंभेनाविधिपूर्वकम् ॥१७॥

आत्मेति । आत्मसंभाविताः सर्वगुणविशिष्टतया आत्मनैव संभाविता आत्मसंभाविता न साधुभिः, स्तब्धा अप्रणतात्मानो, धनमानमदान्विता धननिमित्तो मानो मदश्च ताभ्यां धनमानमदाभ्यामन्विताः । यजन्ते नामयज्ञैः नाममात्रैर्यज्ञैस्ते दंभेन धर्मध्वजितया अविधिपूर्वकं विधिविहिताङ्गेतिकर्तव्यतारहितम् ॥१७॥

अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ॥

मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥१८॥

अहमिति । अहंकारमहंकरणमहंकारो, विद्यमानैरविद्यमानैश्च गुणैरात्मन्यध्यारोपितैः विशिष्टमात्मानमहमिति, मन्यते सोऽहंकारोऽविद्याख्यः कष्टतमः, सर्वदोषाणां मूलं सर्वानर्थप्रवृत्तीनां च तम् । तथा बलं पराभिभवनिमित्तं कामरागान्वितं, दर्पं दर्पो नाम यस्योद्भवे धर्ममतिक्रामति सोऽयमंतःकरणाश्रयो दोषविशेषः, कामं स्त्र्यादिविषयं, क्रोधमनिष्टविषयं, एतानन्यांश्च महतो दोषान् संश्रिताः । किंच ते मामीश्वरमात्मपरदेहेषु स्वदेहे परदेहेषु च तद्बुद्धिकर्मसाक्षिभूतं मां प्रद्विषन्तो, मच्छासनातिवर्तित्वं प्रद्वेषस्तं कुर्वन्तोऽभ्यसूयकाः सन्मार्गस्थानां गुणेष्वसहमानाः ॥१८॥

तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ॥
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥१९॥

तानहमिति । तानहं सर्वान्सन्मार्गप्रतिपक्षभूतान्साधुद्वेषिणो द्विषतश्च मां क्रूरान्संसारेष्वेव अनेकनरकसंसरणमार्गेषु नराधमान् अधर्मदोषवत्त्वात्क्षिपामि प्रक्षिपामि अजस्रं संततमशुभानशुभकर्मकारिणः आसुरीष्वेव क्रूरकर्मप्रायासु व्याघ्रसिंहादियोनिषु, क्षिपामीत्यनेन संबंधः ॥१९॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥२०॥

आसुरीमिति । आसुरीं योनिमापन्नाः प्रतिपन्ना मूढा अविवेकिनः जन्मनि जन्मनि प्रतिजन्म तमोबहुलास्वेव योनिषु जायमाना अधो गच्छन्तो मूढा मामीश्वरमप्राप्य अनासाद्यैव हे कौन्तेय, ततस्तस्मादपि यान्त्यधमां निकृष्टतमां गतिम् । मामप्राप्यैवेति न मत्प्राप्तौ काचिदप्याशंकास्ति, अतो मच्छिष्टसाधुमार्गमप्राप्येत्यर्थः ॥२०॥

सर्वस्या आसुर्याः संपदः संक्षेपोऽयमुच्यते, यस्मिंस्त्रिविधे सर्व आसुरसंपद्भेदोऽनंतोऽप्यंतर्भवति, यत्परिहारेण परिहृतश्च भवति, यन्मूलं सर्वस्यानर्थस्य, तदेतदुच्यते—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ॥
काम: क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥२१॥

त्रिविधमिति । त्रिविधं त्रिप्रकारं नरकस्य प्राप्तौ इदं द्वारं नाशनमात्मनः, यत् द्वारं प्रविशन्नेव नश्यत्यात्मा, कस्मैचित्पुरुषार्थाय योग्यो न भवतीत्येतत्, अत उच्यते द्वारं नाशनमात्मन इति । किं तत्? कामः क्रोधस्तथा लोभः । तस्मादेतत्त्रयं त्यजेत् । यत एतत् द्वारं नाशनमात्मनस्तस्मात्कामादित्रयमेतत् त्यजेत् ॥२१॥

त्यागस्तुतिरियम्—

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ॥
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥२२॥

एतैरिति । एतैर्विमुक्तः कौन्तेय तमोद्वारैस्तमसो नरकस्य दुःखमोहात्मकस्य द्वाराणि कामादयस्तैरेतैस्त्रिभिर्विमुक्तो नर आचरत्यनुतिष्ठति । किं? आत्मनः श्रेयः । यत्प्रतिबद्धः पूर्वं नाचचार तदपगमादाचरति । ततस्तदाचरणाद्याति परां गतिं मोक्षमपीति ॥२२॥

सर्वस्यैतस्य आसुरसंपत्परिवर्जनस्य श्रेयआचरणस्य च शास्त्रं कारणं, शास्त्रप्रमाणादुभयं शक्यं कर्तुं नान्यथा । अतः—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ॥
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥२३॥

य इति । यः शास्त्रविधिं कर्तव्याकर्तव्यज्ञानकारणं विधिप्रतिषेधाख्यं उत्सृज्य त्यक्त्वा वर्तते कामकारतः कामप्रयुक्तः सन् न स सिद्धिं पुरुषार्थयोग्यतामवाप्नोति । नाप्यस्मिँल्लोके सुखं, नापि परां प्रकृष्टां गतिं स्वर्गं मोक्षं वा ॥२३॥

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ॥
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥२४॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि

श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥१६॥

तस्मादिति । तस्माच्छास्त्रं प्रमाणं ज्ञानसाधनं ते तव कार्याकार्यव्यवस्थितौ कर्तव्याकर्तव्यव्यवस्थायाम् । अतो ज्ञात्वा बुद्ध्वा शास्त्रविधानोक्तं, विधिर्विधानं शास्त्रेण विधानं शास्त्रविधानं कुर्यान्न कुर्यादित्येवंलक्षणं, तेनोक्तं स्वकर्म यत्तत्कर्तुमिहार्हसि । इहेति कर्माधिकारभूमिप्रदर्शनार्थमिति ॥२४॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥१६॥

---

## अथ सप्तदशोऽध्यायः ।

'तस्माच्छास्त्रं प्रमाणं ते' [गी.१६.२४] इति भगवद्वाक्याल्लब्धप्रश्नबीजः अर्जुन उवाच—

**अर्जुन उवाच ।**

**ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ॥**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥१॥**

ये इति । ये केचिदविशेषिताः शास्त्रविधिं शास्त्रविधानं श्रुतिस्मृतिशास्त्रचोदनामुत्सृज्य परित्यज्य यजन्ते देवादीन्पूजयन्ति श्रद्धयान्विताः श्रद्धया आस्तिक्यबुद्ध्या अन्विताः संयुक्ताः सन्तः, श्रुतिलक्षणं स्मृतिलक्षणं वा कंचिच्छास्त्रविधिमपश्यन्तो वृद्धव्यवहारदर्शनादेव श्रद्दधानतया ये देवादीन्पूजयन्ति ते इह 'ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः' इत्येवं गृह्यन्ते । ये पुनः कंचिच्छास्त्रविधिमुपलभमाना एव तमुत्सृज्य अयथाविधि देवादीन्पूजयन्ति ते इह 'ये शास्त्रविधिमुत्सृज्य यजन्ते' इति न परिगृह्यन्ते । कस्मात् ? श्रद्धयान्वितत्वविशेषणात् । देवादिपूजाविधिपरं किंचिच्छास्त्रं पश्यन्त एव तदुत्सृज्य अश्रद्दधानतया तद्विहितायां देवादिपूजायां श्रद्धया अन्विताः प्रवर्तन्ते इति न

शक्यं कल्पयितुं यस्मात्, तस्मात्पूर्वोक्ता एव 'ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः' इत्यत्र गृह्यन्ते । तेषामेवंभूतानां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः, किं सत्त्वं निष्ठा अवस्थानं, आहोस्विद्रजः, अथ वा तमः इति । एतदुक्तं भवति–या तेषां देवादिविषया पूजा, सा किं सात्त्विकी, आहोस्विद्राजसी, उत तामसीति ॥१॥

सामान्यविषयोऽयं प्रश्नो नाप्रविभज्य प्रतिवचनमर्हतीति श्रीभगवानुवाच—

श्रीभगवानुवाच ।

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ॥
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥२॥

त्रिविधेति । त्रिविधा त्रिप्रकारा भवति श्रद्धा, यस्यां निष्ठायां त्वं पृच्छसि, देहिनां सा स्वभावजा । जन्मान्तरकृतो धर्मादिसंस्कारो मरणकालेऽभिव्यक्तः स्वभाव उच्यते, ततो जाता स्वभावजा । सात्त्विकी सत्त्वनिर्वृत्ता देवपूजादिविषया, राजसी रजोनिर्वृत्ता यक्षरक्षःपूजादिविषया, तामसी तमोनिर्वृत्ता प्रेतपिशाचादिपूजाविषया, एवं त्रिविधा । तामुच्यमानां श्रद्धां शृणु अवधारय ॥२॥

सैवं त्रिविधा भवति—

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ॥
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥३॥

सत्त्वानुरूपेति । सत्त्वानुरूपा विशिष्टसंस्कारोपेतान्तःकरणानुरूपा सर्वस्य प्राणिजातस्य श्रद्धा भवति भारत । यद्येवं ततः किं स्यादित्युच्यते, श्रद्धामयः श्रद्धाप्रायोऽयं पुरुषः संसारी जीवः । कथं ? यो यच्छ्रद्धो या श्रद्धा यस्य जीवस्य स यच्छ्रद्धः स एव तच्छ्रद्धानुरूप एव स जीवः ॥३॥

ततश्च कार्येण लिंगेन देवादिपूजया सत्त्वादिनिष्ठा अनुमेयेत्याह—

यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ॥

प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥४॥

यजन्ते इति । यजन्ते पूजयन्ति सात्त्विकाः सत्त्वनिष्ठाः देवान्, यक्षरक्षांसि राजसाः, प्रेतान्भूतगणांश्च सप्तमातृकादींश्चान्ये यजन्ते तामसा जनाः ॥४॥

एवं कार्यतो निर्णीताः सत्त्वादिनिष्ठाः शास्त्रविध्युत्सर्गे। तत्र कश्चिदेव सहस्रेषु देवपूजादिपरः सत्त्वनिष्ठो भवति, बाहुल्येन तु रजोनिष्ठास्तमोनिष्ठाश्चैव प्राणिनो भवन्ति । कथम्—

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ॥
दंभाहंकारसंयुक्ताः कामरागबलान्विताः ॥५॥

अशास्त्रविहितमिति । अशास्त्रविहितं न शास्त्रविहितमशास्त्रविहितं घोरं पीडाकरं प्राणिनामात्मनश्च तपस्तप्यन्ते निर्वर्तयन्ति ये जनास्ते च दंभाहंकारसंयुक्ता दंभश्चाहंकारश्च दंभाहंकारौ ताभ्यां संयुक्ता दंभाहंकारसंयुक्ताः, कामरागबलान्विताः कामश्च रागश्च कामरागौ तत्कृतं बलं कामरागबलं तेनान्विताः कामरागबलान्विताः ॥५॥

कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ॥
मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥६॥

कर्शयन्त इति । कर्शयन्तः कृशीकुर्वन्तः शरीरस्थं भूतग्रामं करणसमुदायमचेतसोऽविवेकिनो मां चैव तत्कर्मबुद्धिसाक्षिभूतं अंतःशरीरस्थं नारायणं कर्शयन्तो, मदनुशासनाकरणमेव मत्कर्शनं, तान्विद्ध्यासुरनिश्चयान् आसुरो निश्चयो येषां ते आसुरनिश्चयाः तान्परिहरणार्थं विद्धीत्युपदेशः ॥६॥

आहाराणां च रस्यस्निग्धादिवर्गत्रयरूपेण भिन्नानां यथाक्रमं सात्त्विकराजसतामसपुरुषप्रियत्वदर्शनमिह क्रियते रस्यस्निग्धादिष्वाहारविशेषेष्वात्मनः प्रीत्यतिरेकेण लिंगेन सात्त्विकत्वं राजसत्वं तामसत्वं च बुद्ध्वा रजस्तमोलिंगानामाहाराणां परिवर्जनार्थं सत्त्वलिंगानां चोपादानार्थम् । तथा यज्ञादीनामपि सत्त्वादिगुणभेदेन त्रिविधत्वप्रतिपादनं इह 'राजसतामसान्बुद्ध्वा कथं

तु नाम परित्यजेत्, सात्त्विकानेवानुतिष्ठेत्' इत्येवमर्थं आह—

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ॥
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥७॥

आहार इति । आहारस्त्वपि सर्वस्य भोक्तुः प्राणिनः त्रिविधो भवति प्रिय इष्टः, तथा यज्ञः, तथा तपः, तथा दानम् । तेषामाहारादीनां भेदमिमं वक्ष्यमाणं शृणु ॥७॥

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ॥
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥८॥

आयुरिति । आयुश्च सत्त्वं च बलं च आरोग्यं च सुखं च प्रीतिश्च आयुःसत्त्वबलारोग्यसुखप्रीतयः तासां विवर्धना आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः, ते च रस्या रसोपेताः, स्निग्धाः स्नेहवन्तः, स्थिराश्चिरकालस्थायिनो देहे, हृद्या हृदयप्रिया, आहाराः सात्त्विकप्रियाः सात्त्विकस्येष्टाः ॥८॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ॥
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥९॥

कट्विति । कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः इत्यत्र अतिशब्दः कट्वादिषु सर्वत्र योज्योऽतिकटुरतितीक्ष्ण इत्येवम् । ते च आहारा राजसस्येष्टा, दुःखशोकामयप्रदा दुःखं च शोकं च आमयं च प्रयच्छन्तीति दुःखशोकामयप्रदाः ॥९॥

यातयामं गतरसं पूति पर्युषितं च यत् ॥
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥१०॥

यातयाममिति । यातयामं मंदपक्वं, निर्वीर्यस्य गतरसेनोक्तत्वात् । गतरसं रसवियुक्तं, पूति दुर्गन्धं, पर्युषितं च पक्वं सद्रात्र्यंतरितं च यत्, उच्छिष्टमपि च भुक्तशिष्टमपि, अमेध्यमयज्ञार्हं, भोजनमीदृशं तामसप्रियम् ॥१०॥

अथेदानीं यज्ञस्त्रिविध उच्यते—

अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते ॥
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥११॥

अफलेति । अफलाकांक्षिभिरफलार्थिभिर्यज्ञो विधिदृष्टः शास्त्रचोदनादृष्टो यो यज्ञ इज्यते निर्वर्त्यते, यष्टव्यमेवेति यज्ञस्वरूपनिर्वर्तनमेव कार्यमिति मनः समाधाय, नानेन पुरुषार्थो मम कर्तव्य इत्येवं निश्चित्य, स सात्त्विको यज्ञ उच्यते ॥११॥

अभिसंधाय तु फलं दंभार्थमपि चैव यत् ॥
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥१२॥

अभिसंधायेति । अभिसंधायोद्दिश्य फलं दंभार्थमपि चैव यदिज्यते, भरतश्रेष्ठ तं यज्ञं विद्धि राजसम्'॥१२॥

विधिहीनमसृष्टान्नं मंत्रहीनमदक्षिणम् ॥
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥१३॥

विधिहीनमिति । विधिहीनं यथाचोदितविपरीतम्, असृष्टान्नं ब्राह्मणेभ्यो न सृष्टं न दत्तमन्नं यस्मिन्यज्ञे सोऽसृष्टान्नस्तमसृष्टान्नम्, मंत्रहीनं मंत्रतः स्वरतो वर्णतो वा वियुक्तं मंत्रहीनम्, अदक्षिणमुक्तदक्षिणारहितं, श्रद्धाविरहितं यज्ञं तामसं परिचक्षते तमोनिर्वृत्तं कथयन्ति ॥१३॥

अथेदानीं तपस्त्रिविधं उच्यते—

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ॥
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥१४॥

देवेति । देवाश्च द्विजाश्च गुरवश्च प्राज्ञाश्च देवद्विजगुरुप्राज्ञाः तेषां पूजनं देवद्विजगुरुप्राज्ञपूजनं, शौचं, आर्जवमृजुत्वं, ब्रह्मचर्यमहिंसा च शरीरनिर्वर्त्यं शारीरं शरीरप्रधानैः सर्वैरेव कार्यकरणैः कर्त्रादिभिः साध्यं शारीरं तप उच्यते । 'पंचैते तस्य हेतवः' [गी.१८.१५] इति हि वक्ष्यति ॥१४॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ॥
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥१५॥

अनुद्वेगेति । अनुद्वेगकरं प्राणिनामदुःखकरं वाक्यं सत्यं प्रियहितं च यत्प्रियहिते दृष्टादृष्टार्थे । अनुद्वेगकरत्वादिभिर्धर्मैर्वाक्यं विशेष्यते । विशेषणधर्मसमुच्चयार्थः चशब्दः । परप्रत्ययार्थं प्रयुक्तस्य वाक्यस्य सत्यप्रियहितानुद्वेगकरत्वानामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनता स्याद्यदि, न तद्वाङ्मयं तपः । तथा सत्यवाक्यस्येतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनतायां न वाङ्मयतपस्त्वम् । तथा प्रियवाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनस्य न वाङ्मयतपस्त्वम् । तथा हितवाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनस्य न वाङ्मयतपस्त्वम् । किं पुनस्तत्तपः? यत्सत्यं वाक्यमनुद्वेगकरं प्रियं हितं च, तत् तपो वाङ्मयम् । यथा 'शान्तो भव वत्स, स्वाध्यायं योगं चानुतिष्ठ, तथा ते श्रेयो भविष्यति' इति । स्वाध्यायाभ्यसनं चैव यथाविधि वाङ्मयं तप उच्यते ॥१५॥

**मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ॥**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥१६॥**

मन इति । मनःप्रसादो मनसः प्रशान्तिः, स्वच्छतापादनं प्रसादः, सौम्यत्वं यत्सौमनस्यमाहुः मुखादिप्रसादादिकार्योन्नेया अंतःकरणस्य वृत्तिः, मौनं वाक्संयमोऽपि मनःसंयमपूर्वको भवतीति कार्येण कारणमुच्यते मनःसंयमो मौनमिति । आत्मविनिग्रहो मनोनिरोधः सर्वतः सामान्यरूप आत्मविनिग्रहो, वाग्विषयस्यैव मनसः संयमो मौनामिति विशेषः । भावसंशुद्धिः परैर्व्यवहारकालेऽमायावित्वं भावसंशुद्धिः । इत्येतत्तपो मानसमुच्यते ॥१६॥

यथोक्तं कायिकं वाचिकं मानसं च तपस्तप्तं नरैः सत्त्वादिभेदेन कथं त्रिविधं भवतीत्युच्यते—

**श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ॥**
**अफलाकांक्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥१७॥**

श्रद्धयेति । श्रद्धया आस्तिक्यबुद्ध्या परया प्रकृष्टया तप्तमनुष्ठितं तपस्तत्प्रकृतं त्रिविधं त्रिप्रकारं त्र्यधिष्ठानं नरैरनुष्ठातृभिरफलाकांक्षिभिः फला-

कांक्षारहितैः युक्तैः समाहितैः यदीदृशं तपस्तत्सात्त्विकं सत्त्वनिर्वृत्तं परिचक्षते कथयन्ति शिष्टाः ॥१७॥

सत्कारमानपूजार्थं तपो दंभेन चैव यत् ॥
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥१८॥

सत्कारेति । सत्कारः साधुकारः, साधुरयं तपस्वी ब्राह्मण इत्येवमर्थं, मानो माननं प्रत्युत्थानाभिवादनादिस्तदर्थं, पूजा पादप्रक्षालनार्चनाशायितृत्वादिस्तदर्थं च तपः सत्कारमानपूजार्थं, दंभेन चैव यत्क्रियते तपस्तदिह प्रोक्तं कथितं राजसं चलं कादाचित्कफलत्वेन अध्रुवम् ॥१८॥

मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ॥
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥१९॥

मूढेति । मूढग्राहेणाविवेकानिश्चयेनात्मनः पीडया यत् क्रियते तपः परस्योत्सादनार्थं विनाशार्थं वा तत्तामसं तप उदाहृतम् ॥१९॥

इदानीं दानत्रैविध्यं उच्यते—

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ॥
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥२०॥

दातव्यमिति । दातव्यमित्येवं मनः कृत्वा यद्दानं दीयतेऽनुपकारिणे प्रत्युपकारासमर्थाय, समर्थायापि निरपेक्षं दीयते, देशे पुण्ये कुरुक्षेत्रादौ, काले संक्रान्त्यादौ, पात्रे च षडंगविद्वेदपारग इत्यादौ, तद्दानं सात्त्विकं स्मृतम् ॥२०॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ॥
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥२१॥

यत्त्विति । यत्तु दानं प्रत्युपकारार्थं काले त्वयं मां प्रत्युपकरिष्यतीत्येवमर्थं, फलं वास्य दानस्य मे भविष्यत्यदृष्टमिति, तदुद्दिश्य पुनर्दीयते च परिक्लिष्टं खेदसंयुक्तं तद्दानं राजसं स्मृतम् ॥२१॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ॥
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥२२॥

अदेशेति । अदेशकाले अदेशे अपुण्ये देशे म्लेच्छाशुच्यादिसंकीर्णे, अकाले पुण्यहेतुत्वेनाप्रख्याते संक्रान्त्यादिविशेषरहिते, अपात्रेभ्यश्च मूर्खतस्करादिभ्यो, देशादिसंपत्तौ वासत्कृतं प्रियवचनपादप्रक्षालनपूजादिरहितं अवज्ञातं पात्रपरिभवयुक्तं च यद्दानं तत्तामसमुदाहृतम् ॥२२॥

यज्ञदानतपःप्रभृतीनां साद्गुण्यकरणायायमुपदेश उच्यते—

ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ॥
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥२३॥

ॐ इति । ॐ तत्सत् इत्येवं निर्देशो, निर्दिश्यतेऽनेनेति निर्देशः, त्रिविधो नामनिर्देशो ब्रह्मणः स्मृतश्चिन्तितो वेदान्तेषु ब्रह्मविद्भिः । ब्राह्मणास्तेन निर्देशेन त्रिविधेन वेदाश्च यज्ञाश्च विहिता निर्मिताः पुरा पूर्वमिति निर्देशस्तुत्यर्थमुच्यते ॥२३॥

तस्मात् ॐ इत्युदाहृत्य यज्ञदानतपःक्रियाः ॥
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥२४॥

तस्मादिति । तस्मात् ॐ इत्युदाहृत्योचार्य यज्ञदानतपःक्रिया यज्ञादिस्वरूपाः क्रियाः प्रवर्तन्ते विधानोक्ताः शास्त्रचोदिताः सततं सर्वदा ब्रह्मवादिनां ब्रह्मवदनशीलानाम् ॥२४॥

तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ॥
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकांक्षिभिः ॥२५॥

तदिति । तदित्यनभिसंधाय तदिति ब्रह्माभिधानसमुच्चार्यानभिसंधाय च यज्ञादिकर्मणः फलं यज्ञतपःक्रिया यज्ञक्रियाश्च तपःक्रियाश्च यज्ञतपःक्रिया दानक्रियाश्च विविधाः क्षेत्रहिरण्यप्रदानादिलक्षणाः क्रियन्ते निर्वर्त्यन्ते मोक्षकांक्षिभिर्मोक्षार्थिभिर्मुमुक्षुभिः ॥२५॥

ओंतच्छब्दयोर्विनियोग उक्तः। अथेदानीं सच्छब्दस्य विनियोगः कथ्यते—

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ॥
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥२६॥

सद्भावे इति। सद्भावे, असतः सद्भावे यथा अविद्यमानस्य पुत्रस्य जन्मनि, तथा साधुभावे च असद्वृत्तस्यासाधोः सद्वृत्तता साधुभावस्तास्मिन्साधुभावे च सदित्येतदभिधानं ब्रह्मणः प्रयुज्यते अभिधीयते। प्रशस्ते कर्मणि विवाहादौ च तथा सच्छब्दः पार्थ युज्यते प्रयुज्यते इत्येतत् ॥२६॥

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ॥
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥२७॥

यज्ञे इति। यज्ञे यज्ञकर्मणि या स्थितिः, तपसि च या स्थितिः, दाने च या स्थितिः, सा च सदित्युच्यते विद्वद्भिः। कर्म चैव तदर्थीयं यज्ञदानतपोर्थीयं अथवा यस्याभिधानत्रयं प्रकृतं तदर्थीयं यज्ञदानतपोर्थीयं ईश्वरार्थीयमित्येतत्। सदित्येवाभिधीयते। तदेतद्यज्ञदानतपआदिकर्मासात्त्विकं विगुणमपि श्रद्धापूर्वकं ब्रह्मणोऽभिधानत्रयप्रयोगेण सगुणं सात्त्विकं संपादितं भवति ॥२७॥

तत्र च सर्वत्र श्रद्धाप्रधानतया सर्वं संपाद्यते यस्मात्तस्मात्—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ॥
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥२८॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥१७॥

अश्रद्धयेति। अश्रद्धया हुतं हवनं कृतं, अश्रद्धया दत्तं च ब्राह्मणेभ्यः, अश्रद्धया तपस्तप्तमनुष्ठितं, तथा अश्रद्धयैव कृतं यत्स्तुतिनमस्कारादि, तत्सर्वमसदित्युच्यते, मत्प्राप्तिसाधनमार्गबाह्यत्वात्पार्थ। न च तद्बह्वायासमपि प्रेत्य फलाय, नो अपीहार्थं, साधुभिर्निन्दितत्वादिति ॥२८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥१७॥

## अथाष्टादशोऽध्यायः ।

सर्वस्यैव गीताशास्त्रस्यार्थोऽस्मिन्नध्याये उपसंहृत्य सर्वश्च वेदार्थो वक्तव्य इत्येवमर्थोऽयमध्याय आरभ्यते । सर्वेषु ह्यतीतेष्वध्यायेषूक्तोऽर्थोऽस्मिन्नध्यायेऽवगम्यते । अर्जुनस्तु संन्यासत्यागशब्दार्थयोरेव विशेषं बुभुत्सुरुवाच—

अर्जुन उवाच ।

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ॥
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥१॥

संन्यासस्येति । संन्यासस्य संन्यासशब्दार्थस्येत्येतत्, हे महाबाहो, तत्त्वं तस्य भावस्तत्त्वं याथात्म्यमित्येतत्, इच्छामि वेदितुं ज्ञातुं, त्यागस्य च त्यागशब्दार्थस्येत्येतत्, हृषीकेश पृथगितरेतरविभागतः केशिनिषूदन केशिनामा हयच्छद्मा असुरस्तं निषूदितवान्भगवान्वासुदेवस्तेन तन्नाम्ना संबोध्यतेऽर्जुनेन ॥१॥

संन्यासत्यागशब्दौ तत्र तत्र निर्दिष्टौ न निर्लुंठितार्थौ पूर्वेष्वध्यायेषु । अतोऽर्जुनाय पृष्टवते तन्निर्णयाय भगवान् उवाच—

श्रीभगवानुवाच ।

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ॥
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥२॥

काम्यानामिति । काम्यानामश्वमेधादीनां कर्मणां न्यासं परित्यागं, संन्यासं संन्यासशब्दार्थं, अनुष्ठेयत्वेन प्राप्तस्य अनुष्ठानं, कवयः पंडिताः केचिद्विदुर्विजानन्ति । नित्यनैमित्तिकानामनुष्ठीयमानानां सर्वकर्मणामात्मसंबंधितया प्राप्तस्य फलस्य परित्यागः सर्वकर्मफलत्यागः तं प्राहुः कथयन्ति त्यागं त्यागशब्दार्थं विचक्षणाः पंडिताः । यदि काम्यकर्मपरित्यागः फलपरित्यागो वा अर्थो वक्तव्यः, सर्वथा परित्यागमात्रं संन्यासत्यागशब्दयोरेकोऽर्थः स्यात् न घटपटशब्दाविव जात्यंतरभूतार्थौ ॥

ननु नित्यनैमित्तिकानां कर्मणां फलमेव नास्तीत्याहुः । कथमुच्यते

तेषां फलत्यागः, यथा वंध्यायाः पुत्रत्यागः । नैष दोषः, नित्यानामपि कर्मणां भगवता फलवत्त्वस्येष्टत्वात् । वक्ष्यति हि भगवान् 'अनिष्टमिष्टं मिश्रं च,' इति, 'न तु संन्यासिनां' [गी.१८.१२] इति च । संन्यासिनामेव हि केवलं कर्मफलासंबंधं दर्शयन्नसंन्यासिनां नित्यकर्मफलप्राप्तिं 'भवत्यत्यागिनां प्रेत्य' [गी.१८.१२] इति दर्शयति ॥२॥

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ॥
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥३॥

त्याज्यं दोषेति । त्याज्यं त्यक्तव्यं दोषवद्दोषोऽस्यास्तीति दोषवत् । किं तत्, कर्म बंधहेतुत्वात्सर्वमेव । अथवा दोषो यथा रागादिस्त्यज्यते तथा त्याज्यमित्येके कर्म प्राहुर्मनीषिणः पंडिताः सांख्यादिदृष्टिमाश्रिताः, अधिकृतानां कर्मिणामपीति । तत्रैव यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥

कर्मिण एवाधिकृताः, तानपेक्ष्यैते विकल्पा, न तु ज्ञाननिष्ठान्व्युत्थायिनः संन्यासिनोऽपेक्ष्य । 'ज्ञानयोगेन सांख्यानां निष्ठा मया पुरा प्रोक्ता' [गी.३.३] इति कर्माधिकारादपोद्धृता ये, न तान्प्रति चिंता ॥

ननु 'कर्मयोगेण योगिनां' [गी.३.३] इत्यधिकृताः पूर्वं विभक्तनिष्ठा अपीह सर्वशास्त्रोपसंहारप्रकरणे यथा विचार्यन्ते, तथा सांख्या अपि ज्ञाननिष्ठा विचार्यन्तामिति । न, तेषां मोहदुःखनिमित्तत्यागानुपपत्तेः । न कायक्लेशनिमित्तानि दुःखानि सांख्या आत्मनि पश्यन्ति, इच्छादीनां क्षेत्रधर्मत्वेनैव दर्शितत्वात् । अतस्ते न कायक्लेशदुःखभयात्कर्म परित्यजन्ति । नापि ते कर्माण्यात्मनि पश्यन्ति येन नियतं कर्म मोहात्परित्यजेयुः । गुणानां कर्म 'नैव किंचित्करोमि' [गी.५.८] इति हि ते संन्यस्यन्ति । 'सर्वकर्माणि मनसा संन्यस्य' [गी.५.१३] इत्यादिभिर्हि तत्त्वविदः संन्यासप्रकार उक्तः । तस्माद्येऽन्येऽधिकृताः कर्मण्यनात्मविदो, येषां च मोहात्त्यागः संभवति कायक्लेशभयाच्च, त एव तामसास्त्यागिनो राजसाश्चेति निंद्यन्ते कर्मिणामनात्मज्ञानां कर्मफलत्यागस्तुत्यर्थम् । 'सर्वारंभपरित्यागी' [गी.१२.१६], 'मौनी

संतुष्टो येन केनचिदनिकेतः स्थिरमतिः' [गी.१२.१९] इति गुणातीतलक्षणे च परमार्थसंन्यासिनो विशेषितत्वात् । वक्ष्यति च 'ज्ञानस्य या परा निष्ठा' [गी.१८.५] इति । तस्माज्ज्ञाननिष्ठाः संन्यासिनो नेह विवक्षिताः । कर्मफलत्याग एव सात्त्विकत्वेन गुणेन तामसत्वाद्यपेक्षया संन्यास उच्यते, न मुख्यः सर्वकर्मसंन्यासः ॥

सर्वकर्मसंन्यासासंभवे च 'न हि देहभृता' [गी.१८.११] इति हेतुवचनान्मुख्य एवेति चेत् । न, हेतुवचनस्य स्तुत्यर्थत्वात् । यथा 'त्यागाच्छान्तिरनंतरम्' [गी.१२.१२] इति कर्मफलत्यागस्तुतिरेव यथोक्तानेकपक्षानुष्ठानाशक्तिमन्तमर्जुनमज्ञं प्रति विधानात्; तथेदमपि 'न हि देहभृता शक्यं' [गी.१८.११] इति कर्मफलत्यागस्तुत्यर्थं वचनम् । न 'सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नास्ते' [गी.५.१३] इत्यस्य पक्षस्यापवादः केनचिद्दर्शयितुं शक्यः । तस्मात्कर्मण्यधिकृतान्प्रत्येवैष संन्यासत्यागविकल्पः । ये तु परमार्थदर्शिनः सांख्याः, तेषां ज्ञाननिष्ठायामेव सर्वकर्मसंन्यासलक्षणायामधिकारो नान्यत्र, इति न ते विकल्पार्हाः । तच्चोपपादितमस्माभिः 'वेदाविनाशिनं' [गी.२.२१] इत्यस्मिन्प्रदेशे, तृतीयादौ च ॥३॥

तत्रैतेषु विकल्पभेदेषु—

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ॥
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥४॥

निश्चयमिति । निश्चयं शृण्ववधारय मे मम वचनात्; तत्र त्यागे त्यागसंन्यासविकल्पे यथादर्शिते भरतसत्तम भरतानां साधुतम । त्यागो हि, त्यागसंन्यासशब्दवाच्यो हि योऽर्थः स एक एवेत्यभिप्रेत्याह त्यागो हीति । पुरुषव्याघ्र, त्रिविधस्त्रिप्रकारस्तामसादिप्रकारैः संप्रकीर्तितः शास्त्रेषु सम्यक्कथितः यस्मात्तामसादिभेदेन त्यागसंन्यासशब्दवाच्योऽर्थोऽधिकृतस्य कर्मिणोऽनात्मज्ञस्य त्रिविधः संभवति, न परमार्थदर्शिनः, इत्ययमर्थो दुर्ज्ञानः, तस्मादत्र तत्त्वं नान्यो वक्तुं समर्थः । तस्मान्निश्चयं परमार्थशास्त्रार्थविषयमध्यवसायमैश्वरं मे

मत्तः शृणु ॥४॥

कः पुनरसौ निश्चय इत्यत आह—

**यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत् ॥**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥५॥**

यज्ञ इति । यज्ञो दानं तप इत्येतत् त्रिविधं कर्म न त्याज्यं न त्यक्तव्यं, कार्यं करणीयमेव तत् । कस्मात् ? यज्ञो दानं तपश्चैव पावनानि विशुद्धिकराणि मनीषिणां फलानभिसंधीनामित्येतत् ॥५॥

**एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च ॥**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥६॥**

एतान्यपीति । एतान्यपि तु कर्माणि यज्ञदानतपांसि पावनान्युक्तानि संगमासक्तिं तेषु त्यक्त्वा, फलानि च तेषां परित्यज्य कर्तव्यानीत्यनुष्ठेयानीति मे मम निश्चितं मतमुत्तमम् ॥

निश्चयं शृणु मे तत्र [गी.१८.४] इति प्रतिज्ञाय, पावनत्वं च हेतुमुक्त्वा 'एतान्यपि कर्माणि कर्तव्यानि' इत्येतत् 'निश्चितं मतमुत्तमं' इति प्रतिज्ञातार्थोपसंहार एव नापूर्वार्थं वचनं 'एतान्यपि' इति प्रकृतसंनिकृष्टार्थत्वोपपत्तेः । सासंगस्य फलार्थिनो बंधहेतव एतान्यपि कर्माणि मुमुक्षोः कर्तव्यानि इत्यपि शब्दस्यार्थः । न त्वन्यानि कर्माण्यपेक्ष्य 'एतान्यपि' इत्युच्यते ॥

अन्ये तु वर्णयन्ति– नित्यानां कर्मणां फलाभावात् 'संगं त्यक्त्वा फलानि च' इति नोपपद्यते । अतः 'एतान्यपि' इति यानि काम्यानि कर्माणि नित्येभ्योऽन्यानि, एतान्यपि कर्तव्यानि किमुत, यज्ञदानतपांसि नित्यानीति । तदसत्, नित्यानामपि कर्मणां इह फलवत्त्वस्योपपादितत्वात् 'यज्ञो दानं तपश्चैव पावनानि' [गी.१८.५] इत्यादिवचनेन । नित्यान्यपि कर्माणि बंधहेतुत्वाशंकया जिहासोर्मुमुक्षोः कुतः काम्येषु प्रसंगः ? 'दूरेण ह्यवरं कर्म' [गी.२.३९] इति च निंदितत्वात्, 'यज्ञार्थात्कर्मणोऽन्यत्र' [गी.३.९] इति च काम्यकर्मणां बंधहेतुत्वस्य निश्चितत्वात् । 'त्रैगुण्य-

विषया वेदाः' [गी.२.४५], 'त्रैविद्या मां सोमपाः' [गी.९.२०], 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' [गी.९.२१], इति च दूरव्यवहितत्वाच्च, न काम्येषु 'एतान्यपि' इति व्यपदेशः ॥६॥

तस्मादज्ञस्याधिकृतस्य मुमुक्षोः—

**नियतस्य तु संन्यासः कर्मणो नोपपद्यते ॥**
**मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥७॥**

नियतस्येति । नियतस्य तु नित्यस्य संन्यासः परित्यागः कर्मणो नोपपद्यते, अज्ञस्य पावनत्वस्येष्टत्वात् । मोहादज्ञानात्तस्य नियतस्य परित्यागः— नियतं चावश्यं कर्तव्यं, त्यज्यते चेति विप्रतिषिद्धं, अतो मोहनिमित्तः परित्यागः— तामसः परिकीर्तितो मोहश्च तम इति ॥७॥

किंच—

**दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ॥**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥८॥**

दुःखमिति । दुःखमित्येव यत्कर्म कायक्लेशभयाच्छरीरदुःखभयात्त्यजेत्परित्यजेत्, स कृत्वा राजसं रजोनिर्वर्त्यं त्यागं नैव त्यागफलं ज्ञानपूर्वकस्य सर्वकर्मत्यागस्य फलं मोक्षाख्यं न लभेन्नैव लभेत ॥८॥

कः पुनः सात्त्विकस्त्यागः इत्याह—

**कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ॥**
**संगं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥९॥**

कार्यमिति । कार्यं कर्तव्यमित्येव यत्कर्म नियतं नित्यं क्रियते निर्वर्त्यते हेऽर्जुन, संगं त्यक्त्वा फलं चैव । एतत् नित्यानां कर्मणां फलवत्त्वे भगवद्वचनं प्रमाणमवोचाम । अथवा यद्यपि फलं न श्रूयते नित्यस्य कर्मणः, तथापि नित्यं कर्म कृतं आत्मसंस्कारं प्रत्यवायपरिहारं वा फलं करोत्यात्मन इति कल्पयत्येवाज्ञः । तत्र तामपि कल्पनां निवारयति 'फलं त्यक्त्वा' इत्यनेन । अतः साधूक्तं 'संगं त्यक्त्वा फलं च' इति । स त्यागो नित्यकर्मसु

संगफलपरित्यागः सात्त्विकः सत्त्वनिर्वृत्तो मतोऽभिमतः ॥

ननु कर्मपरित्यागस्त्रिविधः संन्यास इति च प्रकृतः । तत्र तामसो राजसश्चोक्तस्त्यागः । कथमिह संगफलत्यागस्तृतीयत्वेनोच्यते । यथा त्रयो ब्राह्मणा आगताः, तत्र षडंगविदौ द्वौ, क्षत्रियस्तृतीय इति तद्वत् । नैष दोषः त्यागसामान्येन स्तुत्यर्थत्वात् । अस्ति हि कर्मसंन्यासस्य फलाभिसंधित्यागस्य च त्यागत्वसामान्यम् । तत्र राजसतामसत्वेन कर्मत्यागनिंदया कर्मफलाभिसंधित्यागः सात्त्विकत्वेन स्तूयते 'स त्यागः सात्त्विको मतः' इति ॥९॥

यस्तु अधिकृतः संगं त्यक्त्वा फलाभिसंधिं च नित्यं कर्म करोति, तस्य फलरागादिना अकलुषीक्रियमाणमंतःकरणं नित्यैश्च कर्मभिः संस्क्रियमाणं विशुध्यति । विशुद्धं प्रसन्नमात्मालोचनक्षमं भवति । तस्यैव नित्यकर्मानुष्ठानेन विशुद्धान्तःकरणस्य आत्मज्ञानाभिमुखस्य क्रमेण यथा तन्निष्ठा स्यात् तद्वक्तव्यमित्याह——

न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्यते ॥
त्यागी सत्त्वसमाविष्टो मेधावी च्छिन्नसंशयः ॥१०॥

न द्वेष्टीति । न द्वेष्ट्यकुशलमशोभनं काम्यं कर्म, शरीरारंभद्वारेण संसारकारणं, 'किमनेन' इत्येवम् । कुशले शोभने नित्ये कर्मणि सत्त्वशुद्धिज्ञानोत्पत्तितन्निष्ठाहेतुत्वेन 'मोक्षकारणमिदं' इत्येवं नानुषज्यते अनुषंगं प्रीतिं न करोतीत्येतत् । कः पुनरसौ ? त्यागी पूर्वोक्तेन संगफलत्यागेन तद्वांस्त्यागी, यः कर्मणि संगं त्यक्त्वा तत्फलं च नित्यकर्मानुष्ठायी स त्यागी । कदा पुनरसौ अकुशलं कर्म न द्वेष्टि, कुशले च नानुषज्यते इति, उच्यते—सत्त्वसमाविष्टो यदा सत्त्वेन आत्मानात्मविवेकविज्ञानहेतुना समाविष्टः संव्याप्तः, संयुक्त इत्येतत् । अत एव च मेधावी मेधया आत्मज्ञानलक्षणया प्रज्ञया संयुक्तः तद्वान्मेधावी । मेधावित्वादेव च्छिन्नसंशयः छिन्नो अविद्याकृतः संशयो यस्य 'आत्मस्वरूपावस्थानमेव परं निःश्रेयससाधनं नान्यत्किंचित्' इत्येवं निश्चयेन च्छिन्नसंशयः ॥

योऽधिकृतः पुरुषः पूर्वोक्तेन प्रकारेण कर्मयोगानुष्ठानेन क्रमेण संस्कृतात्मा सन् जन्मादिविक्रियारहितत्वेन निष्क्रियमात्मानमात्मत्वेन संबुद्धः, स सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नासीनो नैष्कर्म्यलक्षणां ज्ञाननिष्ठामश्नुते इत्येतत्पूर्वोक्तस्य कर्मयोगस्य प्रयोजनमनेन श्लोकेनोक्तम् ॥१०॥

यः पुनरधिकृतः सन्देहात्माभिमानित्वेन देहभृदज्ञोऽबाधितात्मकर्तृत्वविज्ञानतया अहं कर्तेति निश्चितबुद्धिः तस्याशेषकर्मपरित्यागस्याशक्यत्वात्कर्मफलत्यागेन चोदितकर्मानुष्ठाने एवाधिकारो, न तत्त्यागे इत्येतमर्थं दर्शयितुमाह—

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ॥
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥११॥

न हीति । न हि यस्माद्देहभृता, देहं बिभर्तीति देहभृत्, देहात्माभिमानवान्देहभृदुच्यते, न हि विवेकी, स हि 'वेदाविनाशिनं' [गी.२.२१] इत्यादिना कर्तृत्वाधिकारान्निवर्तितः। अतस्तेन देहभृता अज्ञेन न शक्यं त्यक्तुं संन्यसितुं कर्माण्यशेषतो निःशेषेण । तस्माद्यस्त्वज्ञोऽधिकृतो नित्यानि कर्माणि कुर्वन्कर्मफलत्यागी कर्मफलाभिसंधिमात्रसंन्यासी स त्यागीत्यभिधीयते कर्म्यपि सन्निति स्तुत्यभिप्रायेण । तस्मात्परमार्थदर्शिनैव देहभृता देहात्मभावरहितेन अशेषकर्मसंन्यासः शक्यते कर्तुम् ॥११॥

किं पुनस्तत्प्रयोजनं यत्सर्वकर्मसंन्यासात्स्यादित्युच्यते—

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ॥
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥१२॥

अनिष्टमिति । अनिष्टं नरकतिर्यगादिलक्षणं, इष्टं देवादिलक्षणं, मिश्रमिष्टानिष्टसंयुक्तं मनुष्यलक्षणं च, एवं त्रिविधं त्रिप्रकारं कर्मणो धर्माधर्मलक्षणस्य फलं बाह्यानेककारकव्यापारनिष्पन्नं सत् अविद्याकृतमिंद्रजालमायोपमं महामोहकरं प्रत्यगात्मोपसर्पि इह— फल्गुतया लयमदर्शनं गच्छतीति फलनिर्वचनं— तदेतदेवंलक्षणं फलं भवति अत्यागिनामज्ञानां कर्मिणामपरमार्थ-

संन्यासिनां प्रेत्य शरीरपातादूर्ध्वम् । न तु संन्यासिनां परमार्थसंन्यासिनां परमहंसपरिव्राजकानां केवलज्ञाननिष्ठानां क्वचित् । न हि केवलसम्यग्दर्शननिष्ठा अविद्यादिसंसारबीजं नोन्मूलयति कदाचिदित्यर्थः । अतः परमार्थदर्शिनः एवाशेषकर्मसंन्यासित्वं संभवति, अविद्याध्यारोपितत्वादात्मनि क्रियाकारकफलानां, न त्वज्ञस्याधिष्ठानादीनि क्रियाकर्तृकारकाण्यात्मत्वेनैव पश्यतः अशेषकर्मसंन्यासः संभवति ॥१२॥

तदेतदुत्तरैः श्लोकैर्दर्शयति—

**पंचैतानि महाबाहो कारणानि निबोध मे ॥**
**सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥१३॥**

पंचेति । पंचैतानि वक्ष्यमाणानि हे महाबाहो कारणानि निर्वर्तकानि । निबोध मे ममेति उत्तरत्र चेतःसमाधानार्थं, वस्तुवैषम्यप्रदर्शनार्थं च । तानि च कारणानि ज्ञातव्यतया स्तौति— सांख्ये ज्ञातव्याः पदार्थाः संख्यायन्ते यस्मिञ्शास्त्रे तत्सांख्यं वेदान्तः । कृतान्ते इति तस्यैव विशेषणम् । कृतमिति कर्मोच्यते, तस्या अंतः परिसमाप्तिर्यत्र स कृतान्तः, कर्मान्त इत्येतत् । 'यावानर्थ उदपाने' [गी.२.४६], 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' [गी.४.३३] इत्यात्मज्ञाने संजाते सर्वकर्मणां निवृत्तिं दर्शयति । अतस्तस्मिन्नात्मज्ञानार्थे सांख्ये कृतान्ते वेदान्ते प्रोक्तानि कथितानि सिद्धये निष्पत्त्यर्थं सर्वकर्मणाम् ॥१३॥

कानि तानीत्युच्यते—

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ॥**
**विविधाश्च पृथक्चेष्टा दैवं चैवात्र पंचमम् ॥१४॥**

अधिष्ठानमिति । अधिष्ठानमिच्छाद्वेषसुखदुःखज्ञानादीनामभिव्यक्तेराश्रयोऽधिष्ठानं शरीरं, तथा कर्ता उपाधिलक्षणो भोक्ता, करणं च श्रोत्रादिकं शब्दाद्युपलब्धये पृथग्विधं नानाप्रकारं तत् द्वादशसंख्यं, विविधाश्च पृथक्चेष्टा वायवीयाः प्राणापानाद्याः, दैवं चैव दैवमेव चात्रैतेषु चतुर्षु पंचमं पंचानां

पूरणमादित्यादि चक्षुराद्यनुग्राहकम् ॥१४॥

शरीवाङ्मनोभिर्यत्कर्म प्रारभते नरः ॥
न्याय्यं वा विपरीतं वा पंचैते तस्य हेतवः ॥१५॥

शरीरेति । शरीरवाङ्मनोभिर्यत्कर्म त्रिभिरेतैः प्रारभते निर्वर्तयति नरो, न्याय्यं वा धर्म्यं शास्त्रीयं, विपरीतं वा अशास्त्रीयमधर्म्यम् । यच्चापि निमिषितचेष्टितादि जीवनहेतुः तदपि पूर्वकृतधर्माधर्मयोरेव कार्यमिति न्याय्य-विपरीतयोरेव ग्रहणेन गृहीतम् । पंचैते यथोक्तास्तस्य सर्वस्यैव कर्मणो हेतवः कारणानि ॥

ननु एतानि अधिष्ठानादीनि सर्वकर्मणां निर्वर्तकानि, कथमुच्यते 'शरीरवाङ्मनोभिः कर्म प्रारभते' इति । नैष दोषः, विधिप्रतिषेधलक्षणं सर्वं कर्म शरीरादित्रयप्रधानं, तदंगतया दर्शनश्रवणादि च जीवनलक्षणं त्रिधैव राशीकृतमुच्यते शरीरादिभिरारभ्यते इति । फलकालेऽपि तत्प्रधानैः साधनैः भुज्यते इति पंचानामेव हेतुत्वं न विरुध्यते ॥१५॥

तत्रैवं सति कर्तारमात्मानं केवलं तु यः ॥
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥१६॥

तत्रेति । तत्रेति प्रकृतेन संबध्यते । एवं सति, एवं यथोक्तैः पंच-भिर्हेतुभिर्निर्वर्त्ये सति कर्मणि । तत्रैवं सतीति दुर्मतित्वस्य हेतुत्वेन संबध्यते। तत्र एतेष्वात्मानन्यत्वेन अविद्यया परिकल्पितैः क्रियमाणस्य कर्मणोऽहमेव कर्तेति कर्तारमात्मानं केवलं शुद्धं तु यः पश्यत्यविद्वान्; कस्मात्? वेदान्ता-चार्योपदेशन्यायैरकृतबुद्धित्वादसंस्कृतबुद्धित्वात्; योऽपि देहादिव्यतिरिक्तात्मवादी आत्मानमेव केवलं कर्तारं पश्यति, असावप्यकृतबुद्धिः, अतोऽकृतबुद्धित्वान्न स पश्यत्यात्मनस्तत्त्वं कर्मणो वा इत्यर्थः । अतः दुर्मतिः कुत्सिता विपरीता दुष्टाऽजस्रं जननमरणप्रतिपत्तिहेतुभूता मतिः अस्येति दुर्मतिः । स पश्यन्नपि न पश्यति, यथा तैमिरिकोऽनेकं चंद्रं, यथा वाऽभ्रेषु धावत्सु चंद्रं धावन्तं, यथा वा वाहने उपविष्टोऽन्येषु धावत्स्वात्मानं धावन्तम् ॥१६॥

कः पुनः सुमतिर्यः सम्यक्पश्यतीत्युच्यते—

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।।**
**हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ।।१७।।**

यस्येति । यस्य शास्त्राचार्योपदेशन्यायसंस्कृतात्मनो न भवत्यहंकृतः अहं कर्तेत्येवंलक्षणो भावो भावना प्रत्ययः— एते एव पंचाधिष्ठानादयोऽविद्यया आत्मनि कल्पिताः सर्वकर्मणां कर्तारो, नाहं, अहं तु तद्व्यापाराणां साक्षिभूतः, "अप्राणो ह्यमनाः शुभ्रोऽक्षरात्परतः परः" [मुं.२.१.२] केवलोऽविक्रिय इत्येवं पश्यतीत्येतत् । बुद्धिरंतःकरणं यस्यात्मनः उपाधिभूता न लिप्यते नानुशयिनी भवति— इदमहकार्षं तेनाहं नरकं गमिष्यामि इत्येवं यस्य बुद्धिर्न लिप्यते— स सुमतिः, स पश्यति । हत्वापि स इमाँल्लोकान्सर्वान् इमान् प्राणिनः इत्यर्थः, न हन्ति हननक्रियां न करोति, न निबध्यते नापि तत्कार्येणाधर्मफलेन संबध्यते ।।

ननु हत्वापि न हन्तीति विप्रतिषिद्धमुच्यते यद्यपि स्तुतिः । नैष दोषः, लौकिकपारमार्थिकदृष्टयपेक्षया तदुपपत्तेः । देहाद्यात्मबुद्धया हन्ताहमिति लौकिकीं दृष्टिमाश्रित्य हत्वापीत्याह । यथादर्शितां पारमार्थिकीं दृष्टिमाश्रित्य 'न हन्ति न निबध्यते' इति । एतदुभयमुपपद्यते एव ।।

ननु अधिष्ठानादिभिः संभूय करोत्येवात्मा, 'कर्तारमात्मानं केवलं तु' [गी.१८.१६] इति केवलशब्दप्रयोगात् । नैष दोषः, आत्मनोऽविक्रियस्वभावत्वेऽधिष्ठानादिभिः संहतत्वानुपपत्तेः । विक्रियावतो ह्यन्यैः संहननं संभवति, संहत्य वा कर्तृत्वं स्यात् । न त्वविक्रियस्यात्मनः केनचित्संहननमस्तीति न संभूय कर्तृत्वमुपपद्यते । अतः केवलत्वमात्मनः स्वाभाविकमिति केवलशब्दोऽनुवादमात्रम् । अविक्रियत्वं चात्मनः श्रुतिस्मृतिन्यायप्रसिद्धम् । 'अविकार्योऽयमुच्यते' [गी.२.२५], 'गुणैरेव कर्माणि क्रियन्ते' [गी.३.२७], 'शरीरस्थोऽपि न करोति' [गी.१३.३१] इत्याद्यसकृदुपपादितं गीतास्वेव तावत् । श्रुतिषु च "ध्यायतीव लेलायतीव" [बृ.४.३.७] इत्येवमाद्यासु ।

न्यायतश्च—निरवयवं अपरतंत्रमविक्रियमात्मतत्त्वमिति राजमार्गः । विक्रियावत्त्वाभ्युपगमेऽप्यात्मनः स्वकीयैव विक्रिया स्वस्य भवितुमर्हति, नाधिष्ठानादीनां कर्माण्यात्मकर्तृकाणि स्युः । नहि परस्य कर्म परेणाकृतमागन्तुमर्हति । यत्त्वविद्यया गमितं, न तत्तस्य । यथा रजतत्वं न शुक्तिकायाः, यथा वा तलमलिनत्वं बालैर्गमितमविद्यया, नाकाशस्य, तथाधिष्ठानादिविक्रियापि तेषामेव नात्मनः । तस्माद्युक्तमुक्तं अहंकृतत्वबुद्धिलेपाभावाद्विद्वान्न हन्ति न निबध्यते इति । 'नायं हन्ति न हन्यते' [गी.२.१९] इति प्रतिज्ञाय 'न जायते' [गी.२.२०] इत्यादिहेतुवचनेनाविक्रियत्वमात्मन उक्त्वा, 'वेदाविनाशिनं' [गी.२.२१] इति विदुषः कर्माधिकारनिवृत्तिं शास्त्रादौ संक्षेपतः उक्त्वा, मध्ये प्रसारितां च तत्र तत्र प्रसंगं कृत्वेहोपसंहरति शास्त्रार्थपिंडीकरणाय विद्वान्न हन्ति न निबध्यते इति । एवं च सति देहभृत्त्वाभिमानानुपपत्तौ अविद्याकृताशेषकर्मसंन्यासोपपत्तेः संन्यासिनामनिष्टादि त्रिविधं कर्मणः फलं न भवतीत्युपपन्नं, तद्विपर्ययाच्चेतरेषां भवतीत्येतच्च अपरिहार्यमित्येष गीताशास्त्रार्थ उपसंहृतः । स एष सर्ववेदार्थसारो निपुणमतिभिः पंडितैर्विचार्य प्रतिपत्तव्य इति तत्र तत्र प्रकरणविभागेन दर्शितोऽस्माभिः शास्त्रन्यायानुसारेण ॥१७॥

अथेदानीं कर्मणां प्रवर्तकमुच्यते—

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ॥
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥१८॥

ज्ञानमिति । ज्ञानं ज्ञायतेऽनेनेति सर्वविषयमविशेषेणोच्यते । तथा ज्ञेयं ज्ञातव्यं, तदपि सामान्येनैव सर्वमुच्यते । तथा परिज्ञाता उपाधिलक्षणो अविद्याकल्पितो भोक्ता । इत्येतत् त्रयमविशेषेण सर्वकर्मणां प्रवर्तिका त्रिविधा त्रिप्रकारा कर्मचोदना । ज्ञानादीनां हि त्रयाणां संनिपाते हानोपादानादिप्रयोजनः सर्वकर्मारंभः स्यात् । ततः पंचभिरधिष्ठानादिभिरारब्धं वाङ्मनःकायाश्रयभेदेन त्रिधा राशीभूतं त्रिषु करणादिषु संगृह्यते इत्येतदुच्यते— करणं

क्रियतेऽनेनेति बाह्यं श्रोत्रादि, अंतःस्थं बुद्ध्यादि, कर्म ईप्सिततमं कर्तुः क्रियया व्याप्यमानं, कर्ता करणानां व्यापारयिता उपाधिलक्षणः इति त्रिविधस्त्रिप्रकारः कर्मसंग्रहः, संगृह्यतेऽस्मिन्निति संग्रहः कर्मणः संग्रहः कर्मसंग्रहः। कर्म एषु हि त्रिषु समवैति तेनायं त्रिविधः कर्मसंग्रहः ॥१८॥

अथेदानीं क्रियाकारकफलानां सर्वेषां गुणात्मकत्वात्सत्त्वरजस्तमोगुणभेदतस्त्रिविधो भेदो वक्तव्य इत्यारभ्यते—

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ॥
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥१९॥

ज्ञानमिति। ज्ञानं कर्म च कर्म क्रिया, न कारकं पारिभाषिकमीप्सिततमं कर्म, कर्ता च निर्वर्तकः क्रियाणां त्रिधैव, अवधारणं गुणव्यतिरिक्तजात्यंतराभावप्रदर्शनार्थं गुणभेदतः सत्त्वादिभेदेनेत्यर्थः। प्रोच्यते कथ्यते गुणसंख्याने कापिले शास्त्रे तदपि गुणसंख्यानं शास्त्रं गुणभोक्तृविषये प्रमाणमेव। परमार्थब्रह्मैकत्वविषये यद्यपि विरुध्यते, तथापि ते हि कापिला गुणगौणव्यापारनिरूपणेऽभियुक्ता इति तच्छास्त्रमपि वक्ष्यमाणार्थस्तुत्यर्थत्वेन उपादीयते इति न विरोधः। यथावद्यथान्यायं यथाशास्त्रं शृणु तान्यपि ज्ञानादीनि तद्भेदजातानि गुणभेदकृतानि शृणु, वक्ष्यमाणेऽर्थे मनःसमाधिं कुर्वित्यर्थः ॥१९॥

ज्ञानस्य तु तावत् त्रिविधत्वमुच्यते—

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ॥
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥२०॥

सर्वभूतेष्विति। सर्वभूतेष्वव्यक्तादिस्थावरान्तेषु भूतेषु येन ज्ञानेनैकं भावं वस्तु भावशब्दो वस्तुवाची एकमात्मवस्त्वित्यर्थः। अव्ययं न व्येति स्वात्मना स्वधर्मेण वा कूटस्थमित्यर्थः। ईक्षते पश्यति येन ज्ञानेन, तं च भावमविभक्तं प्रतिदेहं विभक्तेषु देहभेदेषु न विभक्तं तदात्मवस्तु, व्योमवन्निरंतरमित्यर्थः। तज्ज्ञानं साक्षात् सम्यग्दर्शनं अद्वैतात्मविषयं

सात्त्विकं विद्धीति ॥२०॥

यानि द्वैतदर्शनानि तानि असम्यग्भूतानि राजसानि तामसानि चेति न साक्षात्संसारोच्छित्तये भवन्ति—

पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ॥
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥२१॥

पृथक्त्वेनेति । पृथक्त्वेन तु भेदेन प्रतिशरीरमन्यत्वेन यज्ज्ञानं नानाभावान्भिन्नानात्मनः पृथग्विधान्पृथक्प्रकारान्भिन्नलक्षणानित्यर्थः, वेत्ति विजानाति यज्ज्ञानं सर्वेषु भूतेषु, ज्ञानस्य कर्तृत्वासंभवाद्येन ज्ञानेन वेत्तीत्यर्थः, तज्ज्ञानं विद्धि राजसं रजोगुणनिर्वृत्तम् ॥२१॥

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ॥
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥२२॥

यत्त्विति । यत् ज्ञानं कृत्स्नवत्समस्तवत्सर्वविषयमिव एकस्मिन्कार्ये देहे बहिर्वा प्रतिमादौ सक्तं 'एतावानेवात्मेश्वरो वा नातः परमस्ति' इति, यथा नग्नक्षपणकादीनां शरीरान्तर्वर्ती देहपरिमाणो जीवः ईश्वरो वा पाषाणदार्वादिमात्रं, इत्येवमेकस्मिन्कार्ये सक्तमहैतुकं हेतुवर्जितं निर्युक्तिकं, अतत्त्वार्थवत् अयथाभूतार्थवत्, यथाभूतोऽर्थस्तत्त्वार्थः, सोऽस्य ज्ञेयभूतोऽस्तीति तत्त्वार्थवत्, न तत्त्वार्थवदतत्त्वार्थवत्; अहेतुकत्वादेवाल्पं च, अल्पविषयत्वादल्पफलत्वाद्वा । तत्तामसमुदाहृतम् । तामसानां हि प्राणिनामविवेकिनामीदृशं ज्ञानं दृश्यते ॥२२॥

अथेदानीं कर्मणस्त्रैविध्यमुच्यते—

नियतं संगरहितमरागद्वेषतःकृतम् ॥
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥२३॥

नियतमिति । नियतं नित्यं संगरहितमासक्तिवर्जितं अरागद्वेषतःकृतं रागप्रयुक्तेन द्वेषप्रयुक्तेन च कृतं रागद्वेषतःकृतं तद्विपरीतं अरागद्वेषतःकृतं, अफलप्रेप्सुना फलं प्रेप्सतीति फलप्रेप्सुः फलतृष्णः तद्विपरीतेनाफलप्रेप्सुना

कर्त्रा कृतं कर्म यत्तत्सात्त्विकमुच्यते ॥२३॥

यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ॥
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥२४॥

यत्त्विति । यत्तु कामेप्सुना कर्मफलप्रेप्सुनेत्यर्थः, कर्म साहंकारेण वा साहंकारेणेति न तत्त्वज्ञानापेक्षया, किं तर्हि लौकिकश्रोत्रियनिरहंकारापेक्षया । यो हि परमार्थनिरहंकार आत्मवित्, न तस्य कामेप्सुत्वबहुलायासकर्तृत्वप्राप्तिरस्ति । सात्त्विकस्यापि कर्मणोऽनात्मवित्साहंकारः कर्ता, किमुत राजसतामसयोः । लोके अनात्मविदपि श्रोत्रियो निरहंकार उच्यते निरहंकारोऽयं ब्राह्मण इति । तस्मात्तदपेक्षयैव साहंकारेण वा इत्युक्तम् । पुनःशब्दः पादपूरणार्थः । क्रियते बहुलायासं कर्त्रा महता आयासेन निर्वर्त्यते तत्कर्म राजसमुदाहृतम् ॥२४॥

अनुबंधं क्षयं हिंसामनपेक्ष्य च पौरुषम् ॥
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥२५॥

अनुबंधमिति । अनुबंधं पश्चाद्भावि यद्वस्तु सोऽनुबंध उच्यते तं चानुबंधं, क्षयं यस्मिन्कर्मणि क्रियमाणे शक्तिक्षयोऽर्थक्षयो वा स्यात्तं क्षयं, हिंसां प्राणिपीडां च; अनपेक्ष्य च पौरुषं पुरुषकारं शक्नोमीदं कर्म समापयितुं इत्येवमात्मसामर्थ्यम्, इत्येतान्यनुबंधादीन्यनपेक्ष्य पौरुषान्तानि मोहादविवेकत आरभ्यते कर्म यत्तत्तामसं तमोनिर्वृत्तमुच्यते ॥२५॥

इदानीं कर्तृभेदः उच्यते—

मुक्तसंगोऽनहंवादी धृत्युत्साहसमन्वितः ॥
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥२६॥

मुक्तेति । मुक्तसंगो मुक्तः परित्यक्तः संगो येन स मुक्तसंगः, अनहंवादी नाहंवदनशीलो, धृत्युत्साहसमन्वितो धृतिर्धारणमुत्साह उद्यमस्ताभ्यां समन्वितः संयुक्तो धृत्युत्साहसमन्वितः, सिद्ध्यसिद्ध्योः क्रियमाणस्य कर्मणः फलसिद्धौ असिद्धौ च सिद्ध्यसिद्ध्योर्निर्विकारः, केवलं शास्त्रप्रमाणेन प्रयुक्तो

॥२६॥

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ॥
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥२७॥

रागीति । रागी रागोऽस्यास्तीति रागी, कर्मफलप्रेप्सुः कर्मफलार्थी, परद्रव्येषु संजाततृष्णः तीर्थादौ स्वद्रव्यापरित्यागी वा, हिंसात्मकः रस्वभावः, अशुचिर्बाह्यान्तःशौचवर्जितो, हर्षशोकान्वितः इष्ट- हर्षोऽनिष्टप्राप्तौ इष्टवियोगे च शोकस्ताभ्यां हर्षशोकाभ्यामन्वितः संयुक्तः च कर्मणः संपत्तिविपत्तिभ्यां हर्षशोकौ स्यातां ताभ्यां संयुक्तो यः स राजसः परिकीर्तितः ॥२७॥

अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः ॥
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥२८॥

अयुक्त इति । अयुक्तो असमाहितः, प्राकृतोऽत्यंतासंस्कृतबुद्धिर्बाल- स्तब्धो दंडवन्न नमति कस्मैचित्, शठो मायावी शक्तिगूहनकारी, ः परवृत्तिच्छेदनपरः, अलसोऽप्रवृत्तिशीलः कर्तव्येष्वपि, विषादी मावो, दीर्घसूत्री च कर्तव्यानां दीर्घप्रसारणो सर्वदा मंद- ः, यदद्य श्वो वा कर्तव्यं तन्मासेनापि न करोति, यश्चैवंभूतः स तामस उच्यते ॥२८॥

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ॥
प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥२९॥

बुद्धेर्भेदमिति । बुद्धेर्भेदं धृतेश्चैव भेदं गुणतः सत्त्वादिगुणतस्त्रिविधं ति सूत्रोपन्यासः । प्रोच्यमानं कथ्यमानमशेषेण निरवशेषतो यथावत्पृथ- विवेकतो धनंजय । दिग्विजये मानुषं दैवं च प्रभूतं धनं जितवान् तौ धनंजयोऽर्जुनः ॥२९॥

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ॥

बंधं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥३०॥

प्रवृत्तिं चेति । प्रवृत्तिं च प्रवृत्तिः प्रवर्तनं बंधहेतुः कर्ममार्गः शास्त्रविहितविषयः, निवृत्तिं च निवृत्तिर्मोक्षहेतुः संन्यासमार्गः, बंधमोक्षसमानवाक्यत्वात्प्रवृत्तिनिवृत्ती कर्मसंन्यासमार्गौ इत्यवगम्यते । कार्याकार्ये विहितप्रतिषिद्धे लौकिके वैदिके वा शास्त्रबुद्धेः कर्तव्याकर्तव्ये करणाकरणे इत्येतत्; कस्य, देशकालाद्यपेक्षया दृष्टादृष्टार्थानां कर्मणाम् । भयाभये बिभेत्यस्मादिति भयं, न भयमभयं, भयं चाभयं च भयाभये, दृष्टादृष्टविषययोर्भयाभययोः कारणे इत्यर्थः । बंधं सहेतुकं मोक्षं च सहेतुकं या वेत्ति विजानाति बुद्धिः, सा पार्थ सात्त्विकी । तत्र ज्ञानं बुद्धेर्वृत्तिः, बुद्धिस्तु वृत्तिमती । धृतिरपि वृत्तिविशेष एव बुद्धेः ॥३०॥

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ॥
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥३१॥

ययेति । यया धर्मं शास्त्रचोदितं, अधर्मं च तत्प्रतिषिद्धं, कार्यं चाकार्यमेव च पूर्वोक्ते एव कार्याकार्ये अयथावन्न यथावत्सर्वतो निर्णयेन न प्रजानाति, बुद्धिः सा पार्थ राजसी ॥३१॥

अधर्मं धर्ममिति या मन्यते तमसावृता ॥
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥३२॥

अधर्ममिति । अधर्मं प्रतिषिद्धं धर्मं विहितमिति या मन्यते जानाति तमसा आवृता सती, सर्वार्थान्सर्वानेव ज्ञेयपदार्थान्विपरीतांश्च विपरीतानेव विजानाति, बुद्धिः सा पार्थ तामसी ॥३२॥

धृत्या यया धारयते मनःप्राणेंद्रियक्रियाः ॥
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥३३॥

धृत्येति । धृत्या यया, अव्यभिचारिण्येति व्यवहितेन संबंधः, धारयते, किं ? मनःप्राणेंद्रियक्रियाः मनश्च प्राणाश्च इंद्रियाणि च मनःप्राणेंद्रियाणि तेषां क्रियाश्चेष्टाः, ताः उच्छास्त्रमार्गप्रवृत्तेर्धारयते धारयति । धृत्या हि

धार्यमाणा उच्छास्त्रमार्गविषया न भवन्ति । योगेन समाधिना, अव्याभिचा-रिण्या नित्यसमाध्यनुगतयेत्यर्थः । एतदुक्तं भवति— अव्यभिचारिण्या धृत्या मनःप्राणेंद्रियक्रिया धार्यमाणा योगेन धारयतीति । या एवंलक्षणा धृतिः सा पार्थ सात्त्विकी ॥३३॥

यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन ॥
प्रसंगेन फलाकांक्षी धृतिः सा पार्थ राजसी ॥३४॥

ययेति । यया तु धर्मकामार्थान्धर्मश्च कामश्चार्थश्च धर्मकामार्थास्तान्धर्म-कामार्थान्धृत्या यया धारयते मनसि नित्यकर्तव्यरूपानवधारयति हेऽर्जुन, प्रसंगेन यस्य यस्य धर्मादेर्धारणप्रसंगस्तेन तेन प्रसंगेन फलाकांक्षी च भवति यः पुरुषः तस्य धृतिर्या सा पार्थ राजसी ॥३४॥

यया स्वप्नं भयं शोकं विषादं मदमेव च ॥
न विमुंचति दुर्मेधा धृतिः सा तामसी मता ॥३५॥

ययेति । यया स्वप्नं निद्रां भयं त्रासं शोकं विषादं विषण्णतां मदं विषयसेवामात्मनो बहु मन्यमानो मत्त इव मदमेव च मनसि नित्यमेव कर्त-व्यरूपतया कुर्वन् न विमुंचति धारयत्येव दुर्मेधाः कुत्सितमेधाः पुरुषो यः; तस्य धृतिर्या सा तामसी मता ॥३५॥

गुणभेदेन क्रियाणां कारकाणां च त्रिविधो भेद उक्तः । अथेदानीं फलस्य सुखस्य त्रिविधो भेद उच्यते—

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ॥
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥३६॥

सुखमिति । सुखं त्विदानीं त्रिविधं शृणु, समाधानं कुर्वित्येतत्, मे मम भरतर्षभ । अभ्यासात्परिचयादावृत्तेः रमते रतिं प्रतिपद्यते यत्र यस्मिन्सुखानुभवे दुःखान्तं च दुःखावसानं दुःखोपशमं च निगच्छति निश्च-येन प्राप्नोति ॥३६॥

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ॥

तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥३७॥

यदिति । यत्तत्सुखमग्रे पूर्वं प्रथमसंनिपाते ज्ञानवैराग्यध्यानसमाध्यारंभेऽत्यंतायासपूर्वकत्वाद्विषमिव दुःखात्मकं भवति, परिणामे ज्ञानवैराग्यादिपरिपाकजं सुखममृतोपमं, तत्सुखं सात्त्विकं प्रोक्तं विद्वद्भिः, आत्मनो बुद्धिरात्मबुद्धिः, आत्मबुद्धेः प्रसादो नैर्मल्यं सलिलस्येव स्वच्छता, ततो जातमात्मबुद्धिप्रसादजम् । आत्मविषया वा आत्मावलंबना वा बुद्धिरात्मबुद्धिः, तत्प्रसादप्रकर्षाद्वा जातमित्येतत् । तस्मात्सात्त्विकं तत् ॥३७॥

विषयेंद्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ॥
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥३८॥

विषयेति । विषयेंद्रियसंयोगाज्जायते यत्सुखं तत्सुखं अग्रे प्रथमक्षणेऽमृतोपममममृतसमं, परिणामे विषमिव, बलवीर्यरूपप्रज्ञामेधाधनोत्साहहानिहेतुत्वात् अधर्मतज्जनितनरकादिहेतुत्वाच्च परिणामे तदुपभोगपरिणामान्ते विषमिव, तत्सुखं राजसं स्मृतम् ॥३८॥

यदग्रे चानुबंधे च सुखं मोहनमात्मनः ॥
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥३९॥

यदग्रे चेति । यदग्रे च अनुबंधे च अवसानोत्तरकाले सुखं मोहनं मोहकरमात्मनो निद्रालस्यप्रमादोत्थं निद्रा च आलस्यं च प्रमादश्च तेभ्यः समुत्तिष्ठतीति निद्रालस्यप्रमादोत्थं, तत्तामसमुदाहृतम् ॥३९॥

अथेदानीं प्रकरणोपसंहारार्थः श्लोक आरभ्यते—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ॥
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥४०॥

नेति । न तदस्ति तन्नास्ति पृथिव्यां वा मनुष्यादिषु सत्त्वं प्राणिजातमन्यद्वा अप्राणि, दिवि देवेषु वा पुनः सत्त्वं, प्रकृतिजैः प्रकृतितो जातैरेभिस्त्रिभिर्गुणैः सत्त्वादिभिर्मुक्तं परित्यक्तं यत्स्यात्, न तदस्तीति पूर्वेण संबंधः ॥४०॥

सर्वः संसारः क्रियाकारकफललक्षणः सत्त्वरजस्तमोगुणात्मको अविद्यापरिकल्पितः समूलोऽनर्थ उक्तः, वृक्षरूपकल्पनया च 'ऊर्ध्वमूलं' [गी.१५.१] इत्यादिना, 'तं चासंगशस्त्रेण दृढेन छित्वा ततः पदं तत्परिमार्गितव्यं' [गी.१५.३४] इति चोक्तम् । तत्र च सर्वस्य त्रिगुणात्मकत्वात्संसारकारणनिवृत्त्यनुपपत्तौ प्राप्तायां, यथा तन्निवृत्तिः स्यात्तथा वक्तव्यं, सर्वश्च गीताशास्त्रार्थः उपसंहर्तव्यः, एतावानेव च सर्ववेदस्मृत्यर्थः पुरुषार्थमिच्छद्भिरनुष्ठेय इत्येवमर्थं ब्राह्मणक्षत्रियविशामित्यादिरारभ्यते—

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥४१॥

ब्राह्मणेति । ब्राह्मणाश्च क्षत्रियाश्च विशश्च ब्राह्मणक्षत्रियविशः तेषां ब्राह्मणक्षत्रियविशां शूद्राणां च— शूद्राणामसमासकरणमेकजातित्वे सति वेदानधिकारात्— हे परंतप, कर्माणि प्रविभक्तानि इतरेतरविभागेन व्यवस्थापितानि । केन ? स्वभावप्रभवैर्गुणैः, स्वभावः ईश्वरस्य प्रकृतिस्त्रिगुणात्मिका माया सा प्रभवो येषां गुणानां ते स्वभावप्रभवाः तैः शमादीनि कर्माणि प्रविभक्तानि ब्राह्मणादीनाम् । अथवा ब्राह्मणस्वभावस्य सत्त्वगुणः प्रभवः कारणं, तथा क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रजः प्रभवः, वैश्यस्वभावस्य तमउपसर्जनं रजः प्रभवः, शूद्रस्वभावस्य रजउपसर्जनं तमः प्रभवः, प्रशान्त्यैश्वर्येहामूढतास्वभावदर्शनाच्चतुर्णाम् । अथवा, जन्मान्तरकृतसंस्कारः प्राणिनां वर्तमानजन्मनि स्वकार्याभिमुखत्वेनाभिव्यक्तः स्वभावः, स प्रभवो येषां गुणानां ते स्वभावप्रभवा गुणाः, गुणप्रादुर्भावस्य निष्कारणत्वानुपपत्तेः । स्वभावः कारणमिति च कारणविशेषोपादानम् । एवं स्वभावप्रभवैः प्रकृतिभवैः सत्त्वरजस्तमोभिर्गुणैः स्वकार्यानुरूपेण शमादीनि कर्माणि प्रविभक्तानि ॥

ननु शास्त्रप्रविभक्तानि शास्त्रेण विहितानि ब्राह्मणादीनां शमादीनि कर्माणि; कथमुच्यते सत्त्वादिगुणप्रविभक्तानीति । नैष दोषः, शास्त्रेणापि ब्राह्मणादीनां सत्त्वादिगुणविशेषापेक्षयैव शमादीनि कर्माणि प्रविभक्तानि, न

गुणानपेक्षया, इति शास्त्रप्रविभक्तान्यपि कर्माणि गुणप्रविभक्तानीत्युच्यते ॥४१॥

कानि पुनस्तानि कर्माणीत्युच्यते—

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ॥
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥४२॥

शम इति । शमो दमश्च यथाव्याख्यातार्थौ, तपो यथोक्तं शारीरादि, शौचं व्याख्यातं, क्षान्तिः क्षमा, आर्जवमृजुतैव च, ज्ञानं विज्ञानं, आस्तिक्यं आस्तिकभावः श्रद्दधानता आगमार्थेषु, ब्रह्मकर्म ब्राह्मणजातेः कर्म स्वभावजम्। यदुक्तं स्वभावप्रभवैर्गुणैः प्रविभक्तानीति तदेवोक्तं स्वभावजमिति ॥४२॥

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ॥
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥४३॥

शौर्यमिति । शौर्यं शूरस्य भावः, तेजः प्रागल्भ्यं, धृतिर्धारणं, सर्वावस्थास्वनवसादो भवति यया धृत्योत्तंभितस्य, दाक्ष्यं दक्षस्य भावः, सहसा प्रत्युत्पन्नेषु कार्येष्वव्यामोहेन प्रवृत्तिः, युद्धे चाप्यपलायनं अपराङ्मुखीभावः शत्रुभ्यः, दानं देयेषु मुक्तहस्तता, ईश्वरभावश्चेश्वरस्य भावः प्रभुशक्तिप्रकटीकरणमीशितव्यान्प्रति । क्षात्रं कर्म क्षत्रियजातेर्विहितं कर्म क्षात्रं कर्म स्वभावजम् ॥४३॥

कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ॥
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥

कृषीति । कृषिगौरक्ष्यवाणिज्यं कृषिश्च गौरक्ष्यं च वाणिज्यं च कृषिगौरक्ष्यवाणिज्यं, कृषिर्भूमेर्विलेखनं, गौरक्ष्यं गा रक्षतीति गोरक्षस्तद्भावो गौरक्ष्यं पाशुपाल्यं इत्यर्थः, वाणिज्यं वणिक्कर्म क्रयविक्रयादिलक्षणम् । वैश्यकर्म वैश्यजातेः कर्म वैश्यकर्म स्वभावजम् । परिचर्यात्मकं शुश्रूषास्वभावं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥

एतेषां जातिविहितानां कर्मणां सम्यगनुष्ठितानां स्वर्गप्राप्तिः फलं स्वभावतः, 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण

विशिष्टदेशजातिकुलधर्मायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते' [आप. २.२.२.३] इत्यादिस्मृतिभ्यः, पुराणे च वर्णिनामाश्रमिणां च लोकफलभेदविशेषस्मरणात् । कारणान्तरात्तु इदं वक्ष्यमाणं फलम्—

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।।
स्वकर्मनिरतः सिद्धिं यथा विंदति तच्छृणु ।।४५।।

स्वे स्वे इति । स्वे स्वे यथोक्तलक्षणभेदे कर्मण्यभिरतस्तत्परः संसिद्धिं स्वकर्मानुष्ठानादशुद्धिक्षये सति कायेंद्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां संसिद्धिं लभते प्राप्नोति नरोऽधिकृतः पुरुषः । किं स्वकर्मानुष्ठानत एव साक्षात्संसिद्धिः । न, कथं तर्हि स्वकर्मनिरतः सिद्धिं यथा येन प्रकारेण विंदति तच्छृणु ।।४५।।

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विंदति मानवः ।।४६।।

यत इति । यतो यस्मात्प्रवृत्तिरुत्पत्तिश्चेष्टा वा यस्मादंतर्यामिण ईश्वरात् भूतानां प्राणिनां स्यात् येनेश्वरेण सर्वमिदं जगत्ततं व्याप्तं, स्वकर्मणा पूर्वोक्तेन प्रतिवर्णं तमीश्वरमभ्यर्च्य पूजयित्वा आराध्य केवलं ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं विंदति मानवो मनुष्यः ।।४६।।

यत एवमतः—

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ।।४७।।

श्रेयानिति । श्रेयान्प्रशस्यतरः स्वो धर्मः स्वधर्मो विगुणोऽपीत्यपिशब्दो द्रष्टव्यः, परधर्मात्स्वनुष्ठितात् । स्वभावनियतं स्वभावेन नियतं, यदुक्तं स्वभावजमिति तदेवोक्तं स्वभावनियतमिति, यथा विषजातस्य कृमेर्विषं न दोषकरं, तथा स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषं पापम् ।।४७।।

स्वभावनियतं कर्म कुर्वाणो विषजः इव कृमिः किल्बिषं नाप्नोतीत्युक्तम् । परधर्मश्च भयावह इति । अनात्मज्ञश्च 'न हि कश्चित्क्षणमप्यकर्मकृत्तिष्ठति' [गी.३.५] इति । अतः—

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ॥
सर्वारंभा हि दोषेण धूमेनाग्निरिवावृताः ॥४८॥

सहजमिति । सहजं सह जन्मनैवोत्पन्नं, किं तत्? कर्म, कौन्तेय सदोषमपि त्रिगुणात्मकत्वान्न त्यजेत् । सर्वारंभा आरभ्यन्ते इत्यारंभाः, सर्वकर्माणीत्येतत् प्रकरणात् । ये केचिदारंभाः, स्वधर्माः परधर्माश्च ते सर्वे हि यस्मात्— त्रिगुणात्मकत्वमत्र हेतुः— त्रिगुणात्मकत्वाद्दोषेण धूमेन सहजेनाग्निरिवावृताः । सहजस्य कर्मणः स्वधर्माख्यस्य परित्यागेन परधर्मानुष्ठानेऽपि दोषान्नैव मुच्यते, भयावहश्च परधर्मः । न च शक्यते अशेषतस्त्यक्तुमज्ञेन कर्म यतः तस्मान्न त्यजेदित्यर्थः ॥

किमशेषतस्त्यक्तुमशक्यं कर्मेति न त्यजेत्? किंवा सहजस्य कर्मणस्त्यागे दोषो भवतीति? । किंचातः? यदि तावदशेषतस्त्यक्तुमशक्यमिति न त्याज्यं सहजं कर्म, एवं तर्ह्यशेषतस्त्यागे गुण एव स्यादिति सिद्धं भवति । सत्यमेवम्; अशेषतस्त्याग एव नोपपद्यते इति चेत्, किं नित्यप्रचलितात्मकः पुरुषो यथा सांख्यानां गुणाः? किंवा क्रियैव कारकं यथा बौद्धानां स्कंधाः क्षणप्रध्वंसिनः? उभयथापि कर्मणोऽशेषतस्त्यागो न संभवति । अथ तृतीयोऽपि पक्षः— यदा करोति तदा सक्रियं वस्तु । यदा न करोति तदा निष्क्रियं वस्तु तदेव । तत्रैवं सति शक्यं कर्म अशेषतस्त्यक्तुम् । अयं त्वस्मिंस्तृतीये पक्षे विशेषः—न नित्यप्रचलितं वस्तु, नापि क्रियैव कारकम् । किं तर्हि? व्यवस्थिते द्रव्ये अविद्यमाना क्रिया उत्पद्यते, विद्यमाना च विनश्यति । शुद्धं तत् द्रव्यं शक्तिमदवतिष्ठते इत्येवमाहुः काणादास्तदेव च कारकमिति । अस्मिन्पक्षे को दोष इति । अयमेव तु दोषः—यतस्त्वभागवतं मतमिदम् । कथं ज्ञायते, यत आह भगवान् 'नासतो विद्यते भावः' [गी.२.१६] इत्यादि । काणादानां हि असतो भावः, सतश्चाभावः, इतीदं मतं अभागवतम् । अभागवतत्वेऽपि न्यायवच्चेत्को दोष इति चेत् । उच्यते, दोषवत्त्विदं सर्वप्रमाणविरोधात् । कथं, यदि तावत् द्व्यणुकादि

द्रव्यं प्रागुत्पत्तेः अत्यंतमेवासत्, उत्पन्नं च स्थितं कंचित्कालं पुनरत्यंतमेव असत्त्वमापद्यते, तथा च सति, असदेव सज्जायते, सदेव असत्त्वं आपद्यते, अभावो भावो भवति, भावश्चाभावो भवति। तत्राभावो जायमानः प्रागुत्पत्तेः शशविषाणकल्पः समवाय्यसमवायिनिमित्ताख्यं कारणमपेक्ष्य जायते इति। न चैवमभाव उत्पद्यते कारणं चापेक्षते इति शक्यं वक्तुं, असतां शशविषाणादीनामदर्शनात्। भावात्मकाश्चेद्घटादयः उत्पद्यमानाः, किंचिदभिव्यक्तिमात्रे कारणमपेक्ष्योत्पद्यन्ते इति शक्यं प्रतिपत्तुम्। किंच असतश्च सद्भावे सतश्चासद्भावे न क्वचित्प्रमाणप्रमेयव्यवहारेषु विश्वासः कस्यचित्स्यात्, सत्सदेवासदसदेवेतिनिश्चयानुपपत्तेः ॥

किंच उत्पद्यते इति द्व्यणुकादेर्द्रव्यस्य स्वकारणसत्तासंबंधमाहुः। प्रागुत्पत्तेश्चासत्, पश्चात्कारणव्यापारमपेक्ष्य स्वकारणैः परमाणुभिः सत्तया च समवायलक्षणेन संबंधेन संबध्यते। संबद्धं सत् कारणसमवेतं सत् भवति। तत्र वक्तव्यं कथमसतः स्वं कारणं भवेत्संबंधो वा केनचित् स्यात्। नहि वंध्यापुत्रस्य स्वं कारणं संबंधो वा केनचित्प्रमाणतः कल्पयितुं शक्यते ॥

ननु नैवं वैशेषिकैरभावस्य संबंधः कल्प्यते। द्व्यणुकादीनां हि द्रव्याणां स्वकारणेन समवायलक्षणः संबंधः सतामेवोच्यते इति। न, संबंधात्प्राक्सत्त्वानभ्युपगमात्। नहि वैशेषिकैः कुलालदंडचक्रादिव्यापारात्प्राग्घटादीनामस्तित्वमिष्यते। न च मृद एव घटाद्याकारप्राप्तिमिच्छन्ति। ततश्च असत एव संबंधः पारिशेष्यादिष्टो भवति ॥

ननु असतोपि समवायलक्षणः संबंधो न विरुद्धः। न, वंध्यापुत्रादीनामदर्शनात्। घटादेरेव प्रागभावस्य स्वकारणसंबंधो भवति न वंध्यापुत्रादेः, अभावस्य तुल्यत्वेऽपीति विशेषो अभावस्य वक्तव्यः। एकस्याभावो, द्वयोरभावः, सर्वस्याभावः, प्रागभावः, प्रध्वंसाभावः, इतरेतराभावः, अत्यंताभाव इति लक्षणतो न केनचिद्विशेषो दर्शयितुं शक्यः। असति च विशेषे घटस्य प्रागभावः एव कुलालादिभिर्घटभावमापद्यते, संबध्यते च भावेन

कपालाख्येन, संबद्धश्च सर्वव्यवहारयोग्यश्च भवति, ननु घटस्यैव प्रध्वंसाभावः अभावत्वे सत्यपि, इति प्रध्वंसाद्यभावानां न कचिद्व्यवहारयोग्यत्वं, प्रागभावस्यैव द्व्यणुकादिद्रव्याख्यस्य उत्पत्त्यादिव्यवहारार्हत्वं इत्येतत् समंजसं अभावत्वाविशेषादत्यंतप्रध्वंसाभावयोरिव ॥

ननु नैवास्माभिः प्रागभावस्य भावापत्तिरुच्यते । भावस्यैव हि तर्हि भावापत्तिः, यथा घटस्य घटापत्तिः, पटस्य वा पटापत्तिः । एतदपि अभावस्य भावापत्तिवदेव प्रमाणविरुद्धम् । सांख्यस्यापि यः परिणामपक्षः सोऽपि अपूर्वधर्मोत्पत्तिविनाशांगीकरणाद्वैशेषिकपक्षान्न विशिष्यते । अभिव्यक्तितिरोभावांगीकरणेऽपि अभिव्यक्तितिरोभावयोर्विद्यमानत्वाविद्यमानत्वनिरूपणे पूर्ववदेव प्रमाणविरोधः । एतेन कारणस्यैव संस्थानमुत्पत्त्यादीत्येतदपि प्रत्युक्तम् ॥

पारिशेष्यात्सदेकमेव वस्त्वविद्ययोत्पत्तिविनाशादिधर्मैर्नटवदनेकधा विकल्प्यते इति । इदं भागवतं मतमुक्तं 'नासतो विद्यते भावः' [गी.२.१६] इत्यस्मिञ्श्लोके, सत्प्रत्ययस्याव्यभिचारात् व्यभिचाराच्चेतरेषामिति ॥

कथं तर्हि आत्मनोऽविक्रियत्वेऽशेषतः कर्मणस्त्यागो नोपपद्यत इति। यदि वस्तुभूता गुणा, यदि वा अविद्याकल्पिताः, तद्धर्मः कर्म, तदात्मन्यविद्याध्यारोपितमेवेत्यविद्वान् 'न हि कश्चित्क्षणमप्यशेषतस्त्यक्तुं शक्नोति' [गी.३.५] इत्युक्तम् । विद्वांस्तु पुनर्विद्यया अविद्यायां निवृत्तायां शक्नोत्येवाशेषतः कर्म परित्यक्तुं अविद्याध्यारोपितस्य शेषानुपपत्तेः । न हि तैमिरिकदृष्ट्याध्यारोपितस्य द्विचंद्रादेस्तिमिरापगमे शेषोऽवतिष्ठते । एवं च सतीदं वचनमुपपन्नं 'सर्वकर्माणि मनसा' [गी.५.१३] इत्यादि, 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' [गी.१८.४५] 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विंदति मानवः' [गी.१८.४६] इति च ॥४८॥

या च कर्मजा सिद्धिरुक्ता ज्ञाननिष्ठायोग्यतालक्षणा, तस्याः फलभूता नैष्कर्म्यसिद्धिर्ज्ञाननिष्ठालक्षणा च वक्तव्येति श्लोक आरभ्यते—

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ॥

नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥४९॥

असक्तबुद्धिरिति । असक्तबुद्धिरसक्ता संगरहिता बुद्धिरंतःकरणं यस्य सोऽसक्तबुद्धिः सर्वत्र पुत्रदारादिष्वासक्तिनिमित्तेषु, जितात्मा जितो वशीकृत आत्मा अंतःकरणं यस्य स जितात्मा, विगतस्पृहो विगता स्पृहा तृष्णा देहजीवितभोगेषु यस्मात्स विगतस्पृहः । य एवंभूत आत्मज्ञः स नैष्कर्म्यसिद्धिं निर्गतानि कर्माणि यस्मान्निष्क्रियब्रह्मात्मसंबोधात्स निष्कर्मा तस्य भावो नैष्कर्म्यं नैष्कर्म्यं च तत्सिद्धिश्च सा नैष्कर्म्यसिद्धिः नैष्कर्म्यस्य वा निष्क्रियात्मरूपावस्थानलक्षणस्य सिद्धिर्निष्पत्तिः, तां नैष्कर्म्यसिद्धिं परमां प्रकृष्टां कर्मजासिद्धिविलक्षणां सद्योमुक्त्यवस्थानरूपां संन्यासेन सम्यग्दर्शनेन तत्पूर्वकेण वा सर्वकर्मसंन्यासेन, अधिगच्छति प्राप्नोति । तथा चोक्तं 'सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नास्ते' [गी.५.१३] इति ॥४९॥

पूर्वोक्तेन स्वकर्मानुष्ठानेनेश्वराभ्यर्चनरूपेण जनितां प्रागुक्तलक्षणां सिद्धिं प्राप्तस्योत्पन्नात्मविवेकज्ञानस्य केवलात्मज्ञाननिष्ठारूपा नैष्कर्म्यलक्षणा सिद्धिर्येन क्रमेण भवति तद्वक्तव्यमित्याह—

सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ॥
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥५०॥

सिद्धिमिति । सिद्धिं प्राप्तः स्वकर्मणेश्वरं समभ्यर्च्य तत्प्रसादजां कार्येंद्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं प्राप्तः, सिद्धिं प्राप्त इति तदनुवाद उत्तरार्थः । किं तदुत्तरं यदर्थोनुवाद इत्युच्यते । यथा येन प्रकारेण ज्ञाननिष्ठारूपेण ब्रह्म परमात्मानमाप्नोति तथा तं प्रकारं ज्ञाननिष्ठाप्राप्तिक्रमं मे मम वचनान्निबोध त्वं निश्चयेनावधारयेत्येतत् । किं विस्तरेण ? नेत्याह, समासेनैव संक्षेपेणैव हे कौन्तेय यथा ब्रह्म प्राप्नोति तथा निबोधेति । अनेन या प्रतिज्ञाता ब्रह्मप्राप्तिस्तामिदंतया दर्शयितुमाह निष्ठा ज्ञानस्य या परेति । निष्ठा पर्यवसानं परिसमाप्तिरित्येतत् । कस्य ब्रह्मज्ञानस्य या परा । कीदृशी सा यादृशमात्मज्ञानम् । कीदृक्तत्, यादृश आत्मा । कीदृशोऽसौ, यादृशो भग-

वतोक्त उपनिषद्वाक्यैश्च न्यायतश्च ॥

ननु विषयाकारं ज्ञानं न विषयो नाप्याकारवानात्मेष्यते क्वचित् । ननु आदित्यवर्णं भारूपः स्वयंज्योतिः, इत्याकारवत्त्वमात्मनः श्रूयते । न तमोरूपत्वप्रतिषेधार्थत्वात्तेषां वाक्यानाम् । द्रव्यगुणाद्याकारप्रतिषेधे आत्मनस्तमोरूपत्वे प्राप्ते तत्प्रतिषेधार्थानि "आदित्यवर्णं" [श्वे.३.८] इत्यादिवाक्यानि, "अरूपं" [कठ.३.१५] इति च विशेषतो रूपप्रतिषेधात् । अविषयत्वाच्च "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्" । [श्वे.४.२०], "अशब्दमस्पर्शं" [कठ.३.१५] इत्याद्यैः । तस्मादात्माकारं ज्ञानमित्यनुपपन्नम् ॥

कथं तर्ह्यात्मनो ज्ञानम् । सर्वं हि यद्विषयं यत् ज्ञानं तत्तदाकारं भवति । निराकारश्चात्मेत्युक्तम् । ज्ञानात्मनोश्चोभयोर्निराकारत्वे कथं तद्भावनानिष्ठेति । न, अत्यंतनिर्मलत्वातिस्वच्छत्वातिसूक्ष्मत्वोपपत्तेरात्मनः । बुद्धेश्चात्मसमनैर्मल्याद्युपपत्तेरात्मचैतन्याकाराभासत्वोपपत्तिः । बुद्ध्याभासं मनः, तदाभासानींद्रियाणि, इंद्रियाभासश्च देहः । अतो लौकिकैर्देहमात्रे एवात्मदृष्टिः क्रियते ॥

देहचैतन्यवादिनश्च लोकायतिकाः 'चैतन्यविशिष्टः कायः पुरुषः' इत्याहुः । तथाऽन्ये इंद्रियचैतन्यवादिनः, अन्ये मनश्चैतन्यवादिनः, अन्ये बुद्धिचैतन्यवादिनः । ततोऽपि आन्तरं अव्यक्तं अव्याकृताख्यं अविद्यावस्थं आत्मत्वेन प्रतिपन्नाः केचित् । सर्वत्र हि बुद्ध्यादिदेहान्ते आत्मचैतन्याभासता आत्मभ्रान्तिकारणमित्यतश्च आत्मविषयं ज्ञानं न विधातव्यम् । किं तर्हि, नामरूपाद्यनात्माध्यारोपणनिवृत्तिरेव कार्या, नात्मचैतन्यविज्ञानं कार्यं, अविद्याध्यारोपितसर्वपदार्थाकारैः अविशिष्टतया दृश्यमानत्वात् इति । अत एव हि विज्ञानवादिनो बौद्धा विज्ञानव्यतिरेकेण वस्त्वेव नास्तीति प्रतिपन्नाः, प्रमाणान्तरनिरपेक्षतां च स्वसंविदितत्वाभ्युपगमेन । तस्मात् अविद्याध्यारोपितनिराकरणमात्रं ब्रह्मणि कर्तव्यं, न तु ब्रह्मविज्ञाने यत्नः अत्यंतप्रसिद्धत्वात् ।

अविद्याकल्पितनामरूपविशेषाकारापहृतबुद्धीनां अत्यंतप्रसिद्धं सुविज्ञेयं आसन्नतरमात्मभूतमपि, अप्रसिद्धं दुर्विज्ञेयमतिदूरमन्यदिव च प्रतिभात्यविवेकिनाम् । बाह्याकारनिवृत्तबुद्धीनां तु लब्धगुर्वात्मप्रसादानां नातःपरं सुखं सुप्रसिद्धं सुविज्ञेयं स्वासन्नतरमास्ति । तथा चोक्तं 'प्रत्यक्षावगमं धर्म्यम्' [गी.९.२] इत्यादि ॥

केचित्तु पंडितंमन्या– निराकारत्वादात्मवस्तु नोपैति बुद्धिरतो दुःसाध्या सम्यग्ज्ञाननिष्ठा– इत्याहुः । सत्यं, एवं गुरुसंप्रदायरहितानां अश्रुतवेदान्तानामत्यंतबहिर्विषयासक्तबुद्धीनां सम्यक्प्रमाणेष्वकृतश्रमाणां, तद्विपरीतानां तु लौकिकग्राह्यग्राहकद्वैतवस्तुनि सद्बुद्धिर्नितरां दुःसंपादा आत्मचैतन्यव्यतिरेकेण वस्त्वंतरस्यानुपलब्धेः, यथा च 'एतदेवमेव नान्यथा' इत्यवोचाम । उक्तं च भगवता– 'यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' [गी.२.६९] इति । तस्मात् बाह्याकारभेदबुद्धिनिवृत्तिरेव आत्मस्वरूपावलंबनकारणम् । नह्यात्मा नाम कस्यचित्कदाचिदप्रसिद्धः प्राप्यो हेय उपादेयो वा । अप्रसिद्धे हि तस्मिन्नात्मनि स्वार्थाः सर्वाः प्रवृत्तयः व्यर्थाः प्रसज्येरन् । न च देहाद्यचेतनार्थत्वं शक्यं कल्पयितुम् । न च सुखार्थं सुखं दुःखार्थं वा दुःखम् । आत्मावगत्यवसानार्थत्वाच्च सर्वव्यवहारस्य । तस्माद्यथा स्वदेहस्य परिच्छेदाय न प्रमाणान्तरापेक्षा, ततोऽप्यात्मनोऽन्तरतमत्वात्तदवगतिं प्रति न प्रमाणान्तरापेक्षा, इत्यात्मज्ञाननिष्ठा विवेकिनां सुप्रसिद्धा इति सिद्धम् ॥

येषामपि निराकारं ज्ञानमप्रत्यक्षं, तेषामपि ज्ञानवशैव ज्ञेयावगतिरिति ज्ञानमत्यंतं प्रसिद्धं सुखादिवदेवेत्यभ्युपगंतव्यम् । जिज्ञासानुपपत्तेश्च– अप्रसिद्धं चेज्ज्ञानं ज्ञेयवज्जिज्ञास्येत । यथा ज्ञेयं घटादिलक्षणं ज्ञानेन ज्ञाता व्याप्तुमिच्छति तथा ज्ञानमपि ज्ञानान्तरेण ज्ञातव्यं आप्तुमिच्छेत् । न चैतदस्ति । अतोऽत्यंतप्रसिद्धं ज्ञानं, ज्ञाताप्यत एव प्रसिद्ध इति । तस्माज्ज्ञाने यत्नो न कर्तव्यः, किं त्वनात्मनि आत्मबुद्धिनिवृत्तौ एव । तस्मात् ज्ञाननिष्ठा सुसंपाद्या ॥५०॥

सेयं ज्ञानस्य परा निष्ठोच्यते कथं कार्येति—

**बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ॥**
**शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥५१॥**

बुद्ध्येति । बुद्ध्याऽध्यवसात्मिकया विशुद्धया मायारहितया युक्तः संपन्नो, धृत्या धैर्येणात्मानं कार्यकरणसंघातं नियम्य च नियमनं कृत्वा वशीकृत्य, शब्दादीञ्शब्द आदिर्येषां ते शब्दादयस्तान्विषयांस्त्यक्त्वा, सामर्थ्याच्छरीरस्थितिमात्रहेतुभूतान्केवलान्मुक्त्वा ततोऽधिकान्सुखार्थांस्त्यक्त्वा इत्यर्थः, शरीरस्थित्यर्थत्वेन प्राप्तेषु रागद्वेषौ व्युदस्य च परित्यज्य च ॥५१॥

ततः—

**विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ॥**
**ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥५२॥**

विविक्तेति । विविक्तसेवी अरण्यनदीपुलिनगिरिगुहादीन्विविक्तान्देशान्सेवितुं शीलमस्येति विविक्तसेवी। लघ्वाशी लघ्वशनशीलः। विविक्तसेवालघ्वशनयोर्निद्रादिदोषनिवर्तकत्वेन चित्तप्रसादहेतुत्वाद्ग्रहणम् । यतवाक्कायमानसो वाक्च कायश्च मानसं च यतानि संयतानि यस्य ज्ञाननिष्ठस्य स ज्ञाननिष्ठो यतिर्यतवाक्कायमानसः स्यात् । एवमुपरतसर्वकरणः सन् ध्यानयोगपरो ध्यानमात्मस्वरूपचिन्तनं योग आत्मविषय एवैकाग्रीकरणं तौ ध्यानयोगौ परत्वेन कर्तव्यौ यस्य स ध्यानयोगपरः नित्यं, नित्यग्रहणं मंत्रजपाद्यन्यकर्तव्याभावप्रदर्शनार्थम् । वैराग्यं विरागभावो दृष्टादृष्टेषु विषयेषु वैतृष्ण्यं, समुपाश्रितः सम्यगुपाश्रितो नित्यमेवेत्यर्थः ॥५२॥

किंच—

**अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ॥**
**विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥५३॥**

अहंकारमिति । अहंकारमहंकरणमहंकारो देहेंद्रियादिषु, तं बलं सामर्थ्यं कामरागादियुक्तं, नेतरच्छरीरादिसामर्थ्यं स्वाभाविकत्वेन तस्यागस्या-

शक्यत्वात्, दर्पं दर्पो नाम हर्षानंतरभावी धर्मातिक्रमहेतुः 'हृष्टो दृप्यति दृप्तो धर्ममतिक्रामति' [आप.ध.१.१३.४] इति स्मरणात्तं च, काममिच्छां, क्रोधं द्वेषं, परिग्रहमिंद्रियमनोगतदोषपरित्यागेऽपि शरीरधारणप्रसंगेन धर्मानुष्ठाननिमित्तेन वा बाह्यः परिग्रहः प्राप्तः, तं च विमुच्य परित्यज्य परमहंसपरिव्राजको भूत्वा देहजीवनमात्रेऽपि निर्गतममभावः निर्ममोऽत एव शान्त उपरतः, यः संहृतहर्षायासो यतिर्ज्ञाननिष्ठो ब्रह्मभूयाय ब्रह्मभवनाय कल्पते समर्थो भवति ॥५३॥

अनेन क्रमेण—

ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति ॥
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥५४॥

ब्रह्मभूत इति । ब्रह्मभूतो ब्रह्मप्राप्तः प्रसन्नात्मा लब्धाध्यात्मप्रसादो न शोचति, किंचिदर्थवैकल्यमात्मनो वैगुण्यं वा उद्दिश्य न शोचति न संतप्यते, न कांक्षति । ब्रह्मभूतस्यायं स्वभावोऽनूद्यते न शोचति न कांक्षतीति । न ह्यप्राप्तविषयाकांक्षा ब्रह्मविद उपपद्यते । न हृष्यतीति वा पाठः । समः सर्वेषु भूतेषु आत्मौपम्येन सर्वेषु भूतेषु सुखं दुःखं वा सममेव पश्यतीत्यर्थः नात्मसमदर्शनमिह तस्य वक्ष्यमाणत्वात् 'भक्त्या मामभिजानाति' [गी.१८.५५] इति । एवंभूतो ज्ञाननिष्ठो, मद्भक्तिं मयि परमेश्वरे भक्तिं, भजनं परामुत्तमां ज्ञानलक्षणां चतुर्थीं लभते 'चतुर्विधा भजन्ते मां' [गी.७.१६] इति हि उक्तम् ॥५४॥

ततो ज्ञानलक्षणया—

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ॥
ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम् ॥५५॥

भक्त्येति । भक्त्या मामभिजानाति यावानहमुपाधिकृतविस्तरभेदो, यश्चाहं विध्वस्तसर्वोपाधिभेद उत्तमपुरुष आकाशकल्पः, तं मामद्वैतं चैतन्यमात्रैकरसं अजमजरममरमभयमनिधनं तत्त्वतोऽभिजानाति । ततो मामेवं

तत्त्वतो ज्ञात्वा विशते तदनंतरं मामेव । नात्र ज्ञानानन्तरप्रवेशक्रिये भिन्ने विवक्षिते ज्ञात्वा विशते तदनंतरमिति, किं तर्हि, फलान्तराभावात् ज्ञानमात्रमेव, 'क्षेत्रज्ञं चापि मां विद्धि' [गी.१३.२] इत्युक्तत्वात् ॥

ननु विरुद्धमिदमुक्तं 'ज्ञानस्य या परा निष्ठा तया मामभिजानाति' इति। कथं विरुद्धमिति चेदुच्यते— यदैव यस्मिन्विषये ज्ञानमुत्पद्यते ज्ञातुः, तदैव तं विषयमभिजानाति ज्ञातेति न ज्ञाननिष्ठां ज्ञानावृत्तिलक्षणामपेक्षते इति । अतश्च ज्ञानेन नाभिजानाति ज्ञानवृत्त्या तु ज्ञाननिष्ठयाभिजानातीति । नैष दोषः, ज्ञानस्य स्वात्मोत्पत्तिपरिपाकहेतुयुक्तस्य प्रतिपक्षविहीनस्य यदात्मानुभवनिश्चयावसानत्वं तस्य निष्ठाशब्दाभिलापात् शास्त्राचार्योपदेशेन ज्ञानोत्पत्तिपरिपाकहेतुं सहकारिकारणं बुद्धिविशुद्ध्याद्यमानित्वादि चापेक्ष्य जनितस्य क्षेत्रज्ञपरमात्मैकत्वज्ञानस्य कर्तृत्वादिकारकभेदबुद्धिनिबंधनसर्वकर्मसंन्याससहितस्य स्वात्मानुभवनिश्चयरूपेण यदवस्थानं सा परा ज्ञाननिष्ठेत्युच्यते । सेयं ज्ञाननिष्ठा आर्तादिभक्तित्रयापेक्षया परा चतुर्थी भक्तिरित्युक्ता । तया परया भक्त्या भगवन्तं तत्त्वतोऽभिजानाति, यदनंतरमेव ईश्वरक्षेत्रज्ञभेदबुद्धिरशेषतो निवर्तते । अतो ज्ञाननिष्ठालक्षणया भक्त्या मामभिजानातीति वचनं न विरुध्यते । अत्र च सर्वं निवृत्तिविधायि शास्त्रं वेदान्तेतिहासपुराणस्मृतिलक्षणं न्यायप्रसिद्धं अर्थवद्भवति, "विदित्वा व्युत्थायाथ भिक्षाचर्यं चरन्ति" [बृ.३.५.१], "तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः" [तैत्ति.आर.१०.६३.१९], "न्यास एवात्यरेचयत्" [तैत्ति.आर.१०.६२.१२] इति । 'संन्यासः कर्मणां न्यासः' [गी.१८.२], 'वेदानिमं च लोकममुं च परित्यज्य,' 'त्यज धर्ममधर्मं च' [म.भा.शां.३२९.४०] इत्यादि । इह च प्रदर्शितानि वाक्यानि । न च तेषां वाक्यानामानर्थक्यं युक्तम् । न चार्थवादत्वं स्वप्रकरणस्थत्वात्, प्रत्यगात्माविक्रियस्वरूपनिष्ठत्वाच्च मोक्षस्य । न हि पूर्वसमुद्रं जिगमिषोः प्रातिलोम्येन प्रत्यक्समुद्रजिगमिषुणा समानमार्गत्वं संभवति । प्रत्यगात्मविषयप्रत्ययसंतानकरणाभिनिवेशश्च ज्ञाननिष्ठा । सा च

प्रत्यक्समुद्रगमनवत्कर्मणा सहभावित्वेन विरुध्यते । पर्वतसर्षपयोरिवान्तरवान्विरोधः प्रमाणविदां निश्चितः । तस्मात् सर्वकर्मसंन्यासेनैव ज्ञाननिष्ठा कार्या इति सिद्धम् ॥५५॥

स्वकर्मणा भगवतोऽभ्यर्चनभक्तियोगस्य सिद्धिप्राप्तिः फलं ज्ञाननिष्ठायोग्यता, यन्निमित्ता ज्ञाननिष्ठा मोक्षफलावसाना । स भगवद्भक्तियोगोऽधुना स्तूयते शास्त्रार्थोपसंहारप्रकरणे शास्त्रार्थनिश्चयदार्ढ्याय—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ॥
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥५६॥

सर्वकर्माणीति । सर्वकर्माणि प्रतिषिद्धान्यपि सदा कुर्वाणोऽनुतिष्ठन् मद्व्यपाश्रयोऽहं वासुदेव ईश्वरो व्यपाश्रयो व्यपाश्रयणं यस्य स मद्व्यपाश्रयो मय्यर्पितसर्वात्मभाव इत्यर्थः । सोऽपि मत्प्रसादान्ममेश्वरस्य प्रसादादवाप्नोति शाश्वतं नित्यं वैष्णवं पदमव्ययम् ॥५६॥

यस्मादेवं तस्मात्—

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ॥
बुद्धियोगमपाश्रित्य मच्चित्तः सततं भव ॥५७॥ *

चेतसेति । चेतसा विवेकबुद्ध्या सर्वकर्माणि दृष्टादृष्टार्थानि मयीश्वरे संन्यस्य 'यत्करोषि यदश्नासि' [गी.९.२७] इत्युक्तन्यायेन, मत्परोऽहं वासुदेवः परो यस्य तव स त्वं मत्परः मय्यर्पितसर्वात्मभावः सन्बुद्धियोगं समाहितबुद्धित्वं बुद्धियोगस्तं बुद्धियोगमपाश्रित्य अपाश्रयोऽनन्यशरणत्वं मच्चित्तो मय्येव चित्तं यस्य तव स त्वं मच्चित्तः सततं सर्वदा भव ॥५७॥

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ॥
अथ चेत्त्वमहंकारान्न श्रोष्यसि विनंक्ष्यसि ॥५८॥

* 'बुद्धियोगमुपाश्रित्य' इत्यैव तु महाभारतपाठः । 'बुद्धियोगमुपाश्रित्य' इति पाठानुसारि भाष्यस्यापि 'बुद्धियोगमुपाश्रित्य आश्रयः अनन्यशरणत्वं' इति पाठांतरं दृश्यते ॥

मच्चित्त इति । मच्चित्तः सर्वदुर्गाणि सर्वाणि दुस्तराणि संसारहेतुजातानि मत्प्रसादात्तरिष्यस्यतिक्रमिष्यसि । अथ चेत् यदि त्वं मदुक्तमहंकारात्पंडितोऽहमिति न श्रोष्यसि न ग्रहीष्यसि, ततस्त्वं विनंक्ष्यसि विनाशं गमिष्यसि ॥५८॥

इदं च त्वया न मन्तव्यं स्वतंत्रोऽहं किमर्थं परोक्तं करिष्यामीति—

यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ॥
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥५९॥

यदहंकारमिति । यदि चेत्त्वमहंकारमाश्रित्य न योत्स्य इति न युद्धं करिष्यामीति मन्यसे चिंतयसि निश्चयं करोषि मिथ्यैष व्यवसायो निश्चयस्ते तव; यस्मात्प्रकृतिः क्षत्रियस्वभावस्त्वां नियोक्ष्यति ॥५९॥

यस्माच्च—

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ॥
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥६०॥

स्वभावजेनेति । स्वभावजेन शौर्यादिना यथोक्तेन कौन्तेय निबद्धो निश्चयेन बद्धः स्वेनात्मीयेन कर्मणा कर्तुं नेच्छसि यत्कर्म, मोहादविवेकतः करिष्यस्यवशोऽपि परवश एव तत्कर्म ॥६०॥

यस्मात्—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ॥
भ्रामयन्सर्वभूतानि यंत्रारूढानि मायया ॥६१॥

ईश्वर इति । ईश्वर ईशनशीलो नारायणः सर्वभूतानां सर्वप्राणिनां हृद्देशे हृदयदेशेऽर्जुन शुक्लान्तरात्मस्वभावो विशुद्धान्तःकरणः– 'अहश्च कृष्णमहरर्जुनं च' इति दर्शनात्– तिष्ठति स्थितिं लभते । तेषु स कथं तिष्ठतीत्याह भ्रामयन्भ्रमणं कारयन्सर्वभूतानि यंत्रारूढानि यंत्राण्यारूढान्यधिष्ठितानि–इति इवशब्दोऽत्र द्रष्टव्यः । यथा दारुकृतपुरुषादीनि यंत्रारूढानि । मायया छद्मना भ्रामयंस्तिष्ठतीति संबंधः ॥६१॥

तमेव शरणं गच्छ सर्वभावेन भारत ॥
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥६२॥

तमेवेति । तमेवेश्वरं शरणमाश्रयं संसारार्तिहरणार्थं गच्छ आश्रय सर्वभावेन सर्वात्मना हे भारत। ततस्तत्प्रसादादीश्वरानुग्रहात्परां प्रकृष्टां शान्तिं उपरतिं स्थानं च मम विष्णोः परमं पदमवाप्स्यसि शाश्वतं नित्यम् ॥६२॥

इति ते ज्ञानमाख्यातं गुह्यात् गुह्यतरं मया ॥
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥६३॥

इतीति । इत्येतत्ते तुभ्यं ज्ञानमाख्यातं कथितं गुह्याद्गोप्याद्गुह्यतरमतिशयेन गुह्यं रहस्यमित्यर्थः । मया सर्वज्ञेनेश्वरेण विमृश्य विमर्शनमालोचनं कृत्वा एतद्यथोक्तं शास्त्रमशेषेण समस्तं यथोक्तं चार्थजातं यथेच्छसि तथा कुरु ॥६३॥

भूयोऽपि मयोच्यमानं शृणु—

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ॥
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥६४॥

सर्वगुह्यतममिति । सर्वगुह्यतमं सर्वगुह्येभ्योऽत्यंतगुह्यतमं अत्यंतरहस्यमुक्तमप्यसकृत् भूयः पुनः शृणु मे मम परमं प्रकृष्टं वचो वाक्यम् । न भयान्नाप्यर्थकारणाद्वा वक्ष्यामि, किं तर्हि इष्टः प्रियोऽसि मे मम दृढमव्यभिचारेणेति कृत्वा ततस्तेन कारणेन वक्ष्यामि कथयिष्यामि ते हितं परं ज्ञानप्राप्तिसाधनम् । तद्धि सर्वहितानां हिततमम् ॥६४॥

किं तदित्याह—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥६५॥

मन्मना इति । मन्मना भव मच्चित्तो भव, मद्भक्तो भव मद्भजनो भव, मद्याजी मद्यजनशीलो भव, मां नमस्कुरु नमस्कारमपि ममैव कुरु । तत्रैवं वर्तमानो वासुदेवे एव समर्पितसाध्यसाधनप्रयोजनो मामेवैष्यस्यागामि-

ष्यसि । सत्यं ते तव प्रतिजाने सत्यां प्रतिज्ञां करोम्येतस्मिन्वस्तुनीत्यर्थः । यतः प्रियोऽसि मे । एवं भगवतः सत्यप्रतिज्ञत्वं बुद्ध्वा भगवद्भक्तेरवश्यंभावि मोक्षफलमवधार्य भगवच्छरणैकपरायणो भवेदिति वाक्यार्थः ॥६५॥

कर्मयोगनिष्ठायाः परमरहस्यमीश्वरशरणतामुपसंहृत्य, अथेदानीं कर्मयोगनिष्ठाफलं सम्यग्दर्शनं सर्ववेदान्तसारविहितं वक्तव्यमित्याह—

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ॥
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥६६॥

सर्वधर्मानिति । सर्वधर्मान्सर्वे च ते धर्माश्च सर्वधर्मास्तान् । धर्मशब्देनात्राधर्मोऽपि गृह्यते, नैष्कर्म्यस्य विवक्षितत्वात् ''नाविरतो दुश्चरितात्'' [कठ.२.२४], ''त्यज धर्ममधर्मं च'' [मभा.शां.३२९.४०] इत्यादिश्रुतिस्मृतिभ्यः । सर्वधर्मान्परित्यज्य संन्यस्य सर्वकर्माणीत्येतत् । मामेकं सर्वात्मानं समं सर्वभूतस्थमीश्वरमच्युतं गर्भजन्मजरामरणविवर्जितं अहमेव इत्येवं शरणं व्रज, न मत्तोऽन्यदस्तीत्यवधारयेत्यर्थः । अहं त्वा त्वामेवंनिश्चितबुद्धिं सर्वपापेभ्यः सर्वधर्माधर्मबंधनरूपेभ्यो मोक्षयिष्यामि स्वात्मभावप्रकाशीकरणेन । उक्तं च—'नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' [गी.१०.११] इति । अतो मा शुचः शोकं मा कार्षीरित्यर्थः ॥

अस्मिन् गीताशास्त्रे परमनिःश्रेयससाधनं निश्चितं किं ज्ञानं, कर्म वा, आहोस्विदुभयमिति । कुतः संशयः 'यज्ज्ञात्वाऽमृतमश्नुते' [गी.१३.१२], ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम्' [गी.१८.५५] इत्यादीनि वाक्यानि केवलाज्ज्ञानान्निःश्रेयसप्राप्तिं दर्शयन्ति । 'कर्मण्येवाधिकारस्ते' [गी.२.४७], 'कुरु कर्मैव' [गी.४.१५] इत्येवमादीनि कर्मणामवश्यकर्तव्यतां दर्शयन्ति । एवं ज्ञानकर्मणोः कर्तव्यतोपदेशात्समुच्चितयोरपि निःश्रेयसहेतुत्वं स्यादिति भवेत्संशयः कस्यचित् । किं पुनरत्र मीमांसाफलम् ? । नन्वेतदेव एषामन्यतमस्य परमनिःश्रेयससाधनत्वावधारणम् । अतो विस्तीर्णतरं मीमांस्यमेतत् ॥

आत्मज्ञानस्य तु केवलस्य निःश्रेयसहेतुत्वं भेदप्रत्ययनिवर्तकत्वेन कैव-

ल्यफलावसायित्वात्। क्रियाकारकफलभेदबुद्धिरविद्ययात्मनि नित्यप्रवृत्ता— मम कर्माहं कर्तामुष्मै फलायेदं कर्म करिष्यामीतीयं अविद्या अनादिकालप्रवृत्ता। अस्या अविद्याया निवर्तकमयमहमस्मि केवलो अकर्ता अक्रियो अफलो, न मत्तोऽन्योऽस्ति कश्चिदित्येवंरूपमात्मविषयं ज्ञानमुत्पद्यमानं, कर्मप्रवृत्तिहेतुभूताया भेदबुद्धेर्निवर्तकत्वात्। तुशब्दः पक्षद्वयव्यावृत्त्यर्थो— न केवलेभ्यः कर्मभ्यो, न च ज्ञानकर्मभ्यां समुच्चिताभ्यां निःश्रेयसप्राप्तिरिति पक्षद्वयं निवर्तयति। अकार्यत्वाच्च निःश्रेयसस्य कर्मसाधनत्वानुपपत्तिः। न हि नित्यं वस्तु कर्मणा ज्ञानेन वा क्रियते। केवलज्ञानमप्यनर्थकं तर्हि। न, अविद्यानिवर्तकत्वे सति दृष्टकैवल्यफलावसानत्वात्। अविद्यातमोनिवर्तकस्य ज्ञानस्य दृष्टं कैवल्यफलावसानत्वम्। रज्ज्वादिविषये सर्पाद्यज्ञानतमोनिवर्तकप्रदीपप्रकाशफलवत्। विनिवृत्तसर्पादिविकल्परज्जुकैवल्यावसानं हि प्रकाशफलं, तथा ज्ञानम्। दृष्टार्थानां च च्छिदिक्रियाग्निमंथनादीनां व्यापृतकर्त्रादिकारकाणां द्वैधीभावाग्निदर्शनादिफलादन्यफले कर्मान्तरे वा व्यापारानुपपत्तिर्यथा, तथा दृष्टार्थायां ज्ञाननिष्ठाक्रियायां व्यापृतस्य ज्ञात्रादिकारकस्य आत्मकैवल्यफलादन्यफले कर्मान्तरे प्रवृत्तिरनुपपन्नेति न ज्ञाननिष्ठा कर्मसहितोपपद्यते। भुज्यग्निहोत्रादिक्रियावत्स्यादिति चेत्। न, कैवल्यफले ज्ञाने क्रियाफलार्थित्वानुपपत्तेः। कैवल्यफले हि ज्ञाने प्राप्ते, सर्वतःसंप्लुतोदके फले कूपतडागादिक्रियाफलार्थित्वाभाववत्, फलान्तरे तत्साधनभूतायां वा क्रियायामर्थित्वानुपपत्तिः। नहि राज्यप्राप्तिफले कर्मणि व्यापृतस्य क्षेत्रमात्रप्राप्तिफले व्यापारोपपत्तिस्तद्विषयं वा अर्थित्वम्। तस्मान्न कर्मणोऽस्ति निःश्रेयससाधनत्वम्। न च ज्ञानकर्मणोः समुच्चितयोः। नापि ज्ञानस्य कैवल्यफलस्य कर्मसाहाय्यापेक्षा अविद्यानिवर्तकत्वेन विरोधात्। नहि तमस्तमसो निवर्तकम्। अतः केवलमेव ज्ञानं निःश्रेयससाधनमिति। न, नित्याकरणे प्रत्यवायप्राप्तेः, कैवल्यस्य च नित्यत्वात्। यत्तावत्केवलज्ञानात्कैवल्यप्राप्तिरित्येतत्, तदसत्। यतो नित्यानां कर्मणां श्रुत्युक्तानामकरणे प्रत्यवायो नरकादिप्राप्तिलक्षणः स्यात्। नन्वेवं तर्हि कर्मभ्यो

मोक्षो नास्तीत्यनिर्मोक्ष एव । नैष दोषो, नित्यत्वान्मोक्षस्य । नित्यानां कर्मणामनुष्ठानात्प्रत्यवायस्याप्राप्तिः । प्रतिषिद्धस्य चाकरणादनिष्टशरीरानुपपत्तिः । काम्यानां च वर्जनादिष्टशरीरानुपपत्तिः । वर्तमानशरीरारंभकस्य च कर्मणः फलोपभोगक्षये पतितेऽस्मिञ्शरीरे देहान्तरोत्पत्तौ च कारणाभावादात्मनो रागादीनां चाकरणात्स्वरूपावस्थानमेव कैवल्यमित्ययत्नसिद्धं कैवल्यमिति । अतिक्रान्तानेकजन्मांतरकृतस्य स्वर्गनरकादिप्राप्तिफलस्यानारब्धकार्यस्योपभोगानुपपत्तेः क्षयाभाव इति चेत् । न, नित्यकर्मानुष्ठानायासदुःखोपभोगस्य तत्फलोपभोगत्वोपपत्तेः । प्रायश्चित्तवद्वा पूर्वोपात्तदुरितक्षयार्थत्वान्नित्यकर्मणाम् । आरब्धानां च कर्मणां उपभोगेनैव क्षीणत्वादपूर्वाणां च कर्मणामनारंभेऽयत्नसिद्धं कैवल्यमिति । न, "तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय" [श्वेताश्व. ३.८] इति विद्याया अन्यः पंथा मोक्षाय न विद्यते इति श्रुतेः चर्मवदाकाशवेष्टनासंभववदविदुषो मोक्षासंभवश्रुतेः "अज्ञानात्कैवल्यमाप्नोति" इति च पुराणस्मृतेः, अनारब्धफलानां पुण्यानां कर्मणां क्षयानुपपत्तेश्च । यथा पूर्वोपात्तानां दुरितानामनारब्धफलानां संभवः, तथा पुण्यानामप्यनारब्धफलानां स्यात्संभवः । तेषां च देहान्तरमकृत्वा क्षयानुपपत्तौ मोक्षानुपपत्तिः । धर्माधर्महेतूनां च रागद्वेषमोहानामन्यत्रात्मज्ञानादुच्छेदानुपपत्तेर्धर्माधर्मोच्छेदानुपपत्तिः । नित्यानां च कर्मणां पुण्यफलत्वश्रुतेः "वर्णा आश्रमाश्च स्वकर्मनिष्ठा" इत्यादिस्मृतेश्च कर्मक्षयानुपपत्तिः ॥

ये त्वाहुः नित्यानि कर्माणि दुःखरूपत्वात्पूर्वकृतदुरितकर्मणां फलमेव, न तु तेषां स्वरूपव्यतिरेकेणान्यत्फलमस्ति, अश्रुतत्वात्, जीवनादिनिमित्ते च विधानादिति । न, अप्रवृत्तानां कर्मणां फलदानासंभवात्, दुःखफलविशेषानुपपत्तिश्च स्यात् । यदुक्तं पूर्वजन्मकृतदुरितानां कर्मणां फलं नित्यकर्मानुष्ठानायासदुःखं भुज्यत इति, तदसत् । न हि मरणकाले फलदानाय अनंकुरीभूतस्य कर्मणः फलमन्यकर्मारब्धे जन्मन्युपभुज्यत इत्युपपत्तिः । अन्यथा स्वर्गफलोपभोगाय अग्निहोत्रादिकर्मारब्धे जन्मनि नरकफलोपभोगानुपपत्तिर्न

स्यात् । तस्य दुरितस्य दुःखविशेषफलत्वानुपपत्तेश्च, अनेकेषु हि दुरितेषु संभवत्सु भिन्नदुःखसाधनफलेषु नित्यकर्मानुष्ठायासदुःखमात्रफलेषु कल्प्यमानेषु द्वंद्वरोगादिबाधनं निर्निमित्तं न हि शक्यते कल्पयितुं, नित्यकर्मानुष्ठानायासदुःखमेव पूर्वकृतदुरितफलं न शिरसा पाषाणवहनादिदुःखमिति। अप्रकृतं चेदमुच्यते— नित्यकर्मानुष्ठानायासदुःखं पूर्वकृतदुरितकर्मफलमिति । कथम्, अप्रसूतफलस्य हि पूर्वकृतदुरितस्य क्षयो नोपपद्यते इति प्रकृतम् । तत्र प्रसूतफलस्य कर्मणः फलं नित्यकर्मानुष्ठानायासदुःखमाह भवान्, नाप्रसूतफलस्येति । अथ सर्वमेव पूर्वकृतं दुरितं प्रसूतफलमेवेति मन्यते भवान्, ततो नित्यकर्मानुष्ठानायासदुःखमेव फलमिति विशेषणमयुक्तम् । नित्यकर्मविध्यानर्थक्यप्रसंगश्च, उपभोगेनैव प्रसूतफलस्य दुरितकर्मणः क्षयोपपत्तेः । किंच, श्रुतस्य नित्यस्य दुःखं कर्मणः चेत् फलं, नित्यकर्मानुष्ठानायासादेव तत् दृश्यते व्यायामादिवत्; तदन्यस्येतिकल्पनानुपपत्तिः। जीवनादिनिमित्ते च विधानान्नित्यानां कर्मणां प्रायश्चित्तवत्पूर्वकृतदुरितफलत्वानुपपत्तिः । यस्मिन्पापकर्मणि निमित्ते यद्विहितं प्रायश्चित्तं न तु तस्य पापस्य तत्फलम् । अथ तस्यैव पापस्य निमित्तस्य प्रायश्चित्तदुःखं फलं, जीवनादिनिमित्तेऽपि नित्यकर्मानुष्ठानायासदुःखं जीवनादिनिमित्तस्यैव तत्फलं प्रसज्येत, नित्यप्रायश्चित्तयोर्नैमित्तिकत्वाविशेषात् । किंचान्यत् नित्यस्य— काम्यस्य चाग्निहोत्रादेरनुष्ठानायासदुःखस्य तुल्यत्वान्नित्यानुष्ठानायासदुःखमेव पूर्वकृतदुरितस्य फलं, न तु काम्यानुष्ठानायासदुःखमिति विशेषो नास्तीति तदपि पूर्वकृतदुरितफलं प्रसज्येत। तथा च सति नित्यानां फलाश्रवणात्तद्विधानान्यथानुपपत्तेश्च नित्यानुष्ठानायासदुःखं पूर्वकृतदुरितफलमित्यर्थापत्तिकल्पना च अनुपपन्ना, एवं विधानान्यथानुपपत्तेरनुष्ठानायासदुःखव्यतिरिक्तफलत्वानुमानाच्च नित्यानाम् । विरोधाच्च। विरुद्धं चेदमुच्यते— नित्यकर्मणा अनुष्ठीयमानेन अन्यस्य कर्मणः फलं भुज्यते इत्यभ्युपगम्यमाने स एवोपभोगो नित्यस्य कर्मणः फलमिति, नित्यस्य कर्मणः फलाभाव इति च विरुद्धमुच्यते । किंच, काम्याग्निहोत्रादौ

अनुष्ठीयमाने नित्यमप्यग्निहोत्रादि तंत्रेणैवानुष्ठितं भवतीति तदायासदुःखेनैव काम्याग्निहोत्रादिफलमुपक्षीणं स्यात् तत्तंत्रत्वात्। अथ काम्याग्निहोत्रादिफलमन्यदेव स्वर्गादि, तदनुष्ठानायासदुःखमपि भिन्नं प्रसज्येत। न च तदस्ति दृष्टविरोधात्। न हि काम्यानुष्ठानायासदुःखात्केवलनित्यानुष्ठानायासदुःखं भिन्नं दृश्यते। किंचान्यत्, अविहितमप्रतिषिद्धं च कर्म तत्कालफलं, न तु शास्त्रचोदितं प्रतिषिद्धं वा तत्कालफलं भवेत्। तदा स्वर्गादिष्वप्यदृष्टफलाशासनेन उद्यमो न स्यात्। अग्निहोत्रादीनामेव कर्मस्वरूपाविशेषेऽनुष्ठानायासदुःखमात्रेणोपक्षयः नित्यानाम्, स्वर्गादिमहाफलत्वं काम्यानां, अंगेतिकर्तव्यताद्याधिक्ये त्वसति, फलकामित्वमात्रेणेति। तस्मान्न नित्यानां कर्मणामदृष्टफलाभावः कदाचिदप्युपपद्यते। अतश्चाविद्यापूर्वकस्य कर्मणो विद्यैव शुभस्याशुभस्य वा क्षयकारणमशेषतो, न नित्यकर्मानुष्ठानम्। अविद्याकामबीजं हि सर्वमेव कर्म। तथाचोपपादितं अविद्वद्विषयं कर्म, विद्वद्विषया च सर्वकर्मसंन्यासपूर्विका ज्ञाननिष्ठा। 'उभौ तौ न विजानीतः' [गी.२.१९], 'वेदाविनाशिनं नित्यं' [गी.२.२१], 'ज्ञानयोगेन सांख्यानां कर्मयोगेण योगिनाम्' [गी.३.३], 'अज्ञानां कर्मसंगिनां' [गी.३.२६], 'तत्त्ववित्तु गुणा गुणेषु वर्तन्ते इति मत्वा न सज्जते' [गी.३.२८], 'सर्वकर्माणि मनसा संन्यस्यास्ते' [गी.५.१३], 'नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्' [गी.५.८], अर्थादज्ञः करोमीति, 'आरुरुक्षोः कर्म कारणमारूढस्य योगस्थस्य शम एव कारणं [गी.६.३], 'उदाराश्चयोऽप्यज्ञा ज्ञानी त्वात्मैव मे मतं' [गी.७.१८], अज्ञाः कर्मिणो 'गतागतं कामकामा लभन्ते' [गी.९.२१], 'अनन्याश्चिन्तयन्तो मां नित्ययुक्ता यथोक्तमात्मानमाकाशकल्पकल्मषमुपासते, ददामि बुद्धियोगं तं येन मामुपयान्ति ते' [गी.१०.१०], अर्थान्न कर्मिणोऽज्ञा उपयान्ति। भगवत्कर्मकारिणो ये युक्ततमा अपि कर्मिणोऽज्ञाः, ते उत्तरोत्तरहीनफलत्यागावसानसाधनाः। अनिर्देश्याक्षरोपासकास्तु 'अद्वेष्टा सर्वभूतानां' [गी.१२.१३] इति आ अध्यायपरिसमाप्ति उक्तसाधनाः क्षेत्राध्यायाद्यध्यायत्रयोक्तज्ञानसाधनाच। अधि-

ष्ठानादिपंचहेतुकसर्वकर्मसंन्यासिनामात्मैकत्वाकर्तृत्वज्ञानवतां परस्यां ज्ञाननिष्ठायां वर्तमानानां भगवत्तत्त्वविदामनिष्टादिकर्मफलत्रयं परमहंसपरिव्राजकानामेव लब्धभगवत्स्वरूपात्मैकत्वशरणानां न भवति, भवत्येवान्येषामज्ञानां कर्मिणामसंन्यासिनामित्येष गीताशास्त्रोक्तस्य कर्तव्याकर्तव्यार्थस्य विभागः ॥

अविद्यापूर्वकत्वं सर्वस्य कर्मणोऽसिद्धमिति चेत् । न, ब्रह्महत्यादिवत् । यद्यपि शास्त्रावगतं नित्यं कर्म, तथाप्यविद्यावत एव भवति । यथा प्रतिषेधशास्त्रावगतमपि ब्रह्महत्यादिलक्षणं कर्मानर्थकारणं अविद्याकामादिदोषवतो भवति, अन्यथा प्रवृत्त्यनुपपत्तेः, तथा नित्यनैमित्तिककाम्यान्यपीति । देहव्यतिरिक्तात्मन्यज्ञाते प्रवृत्तिर्नित्यादिकर्मस्वनुपपन्नेति चेत् । न, चलनात्मकस्य कर्मणः अनात्मकर्तृकस्य 'अहं करोमि' इतिप्रवृत्तिदर्शनात् । देहादिसंघातेऽहंप्रत्ययो गौणो, न मिथ्या इति चेत्, न, तत्कार्येष्वपि गौणत्वोपपत्तेः । आत्मीयो देहादिसंघातेऽहंप्रत्ययो गौणो, यथात्मीये पुत्रे आत्मा वै पुत्रनामासीति, लोके चापि मम प्राण एवायं गौरिति तद्वत् । नैवायं मिथ्याप्रत्ययः । मिथ्याप्रत्ययस्तु स्थाणुपुरुषयोरगृह्यमाणविशेषयोः । न गौणप्रत्ययस्य मुख्यकार्यार्थत्वमधिकरणस्तुत्यर्थत्वाल्लुप्तोपमाशब्देन । यथा सिंहो देवदत्तोऽग्निर्माणवक इति सिंह इवाग्निरिव क्रौर्यपैंगल्यादिसामान्यवत्त्वाद्देवदत्तमाणवकाधिकरणस्तुत्यर्थमेव, न तु सिंहकार्यमग्निकार्यं वा गौणशब्दप्रत्ययनिमित्तं किंचित्साध्यते; मिथ्याप्रत्ययकार्यं त्वनर्थमनुभवति इति । गौणप्रत्ययविषयं च जानाति, नैष सिंहो देवदत्तः स्यान्नायमग्निर्माणवक इति । तथा गौणेन देहादिसंघातेनात्मना कृतं कर्म न मुख्येनाहंप्रत्ययाविषयेणात्मना कृतं स्यात् । न हि गौणसिंहाग्निभ्यां कृतं कर्म मुख्यसिंहाग्निभ्यां कृतं स्यात् । न च क्रौर्येण पैंगल्येन वा मुख्यसिंहाग्न्योः कार्यं किंचित्क्रियते, स्तुत्यर्थत्वेनोपक्षीणत्वात् । स्तूयमानौ च जानीतो नाहं सिंहो नाहमग्निरिति, न सिंहस्य कर्म ममाग्नेश्चेति । तथा न संघातस्य कर्म मम मुख्यस्यात्मन इति प्रत्ययो युक्ततरः स्यात्, न पुनरहं कर्ता मम कर्मेति । यच्चाहुः आत्मीयैः स्मृतीच्छाप्रयत्नैः

कर्महेतुभिरात्मा कर्म करोतीति । न, तेषां मिथ्याप्रत्ययपूर्वकत्वात् मिथ्याप्रत्ययनिमित्तेष्टानिष्टानुभूतक्रियाफलजनितसंस्कारपूर्वका हि स्मृतीच्छाप्रयत्नादयः । यथास्मिन् जन्मनि देहादिसंघाताभिमानरागद्वेषादिकृतौ धर्माधर्मौ तत्फलानुभवश्च, तथातीतेऽतीततरेऽपि जन्मनि इत्यनादिरविद्याकृतः संसारोऽतीतोऽनागतश्चानुमेयः । ततश्च सर्वकर्मसंन्याससहितज्ञाननिष्ठया आत्यंतिकः संसारोपम इति सिद्धम् । अविद्यात्मकत्वाच्च देहाभिमानस्य, तन्निवृत्तौ देहानुपपत्तेः संसारानुपपत्तिः । देहादिसंघाते आत्माभिमानोऽविद्यात्मकः । न हि लोके गवादिभ्योऽन्योऽहं मत्तश्चान्ये गवादय इति जानंस्तानहमिति मन्यते कश्चित् । अजानंस्तु स्थाणौ पुरुषविज्ञानवदविवेकतो देहादिसंघाते कुर्यादहमिति प्रत्ययं, न विवेकतो जानन् । यस्त्वात्मा वै पुत्रनामासीति पुत्रेऽहंप्रत्ययः, स तु जन्यजनकसंबंधनिमित्तो गौणः । गौणेन चात्मना भोजनादिवत्परमार्थकार्यं न शक्यते कर्तुं, गौणसिंहाग्निभ्यां मुख्यसिंहाग्निकार्यवत् ॥

अदृष्टविषयचोदनाप्रामाण्यादात्मकर्तव्यं गौणैर्देहेंद्रियात्मभिः क्रियते च इति चेत् । न, अविद्याकृतात्मकत्वात्तेषाम् । न च गौणा आत्मनो देहेंद्रियादयः । किं तर्हि ? मिथ्याप्रत्ययेनैव अनात्मानः सन्तः आत्मत्वमापाद्यन्ते, तद्भावे भावात्तदभावे चाभावात् । अविवेकिनां ह्यज्ञानकाले बालानां दृश्यते दीर्घोऽहं गौरोऽहमिति देहादिसंघातेऽहंप्रत्ययः । न तु विवेकिनं अन्योऽहं देहादिसंघातादितिज्ञानवतां तत्काले देहादिसंघातेऽहंप्रत्ययो भवति । तस्मान्मिथ्याप्रत्ययभावे अभावात्तत्कृत एव, न गौणः । पृथग्गृह्यमाणविशेषसामान्ययोर्हि सिंहदेवदत्तयोरग्निमाणवकयोर्वा गौणः प्रत्ययः शब्दप्रयोगो वा स्यात्, न अगृह्यमाणसामान्यविशेषयोः । यत्तूक्तं श्रुतिप्रामाण्यादिति । तत् न, तत्प्रामाण्यस्यादृष्टविषयत्वात् । प्रत्यक्षादिप्रमाणानुपलब्धे हि विषयेऽग्निहोत्रादिसाध्यसाधनसंबंधे श्रुतेः प्रामाण्यं, न प्रत्यक्षादिविषये, अदृष्टदर्शनार्थविषयत्वात्प्राणस्य । तस्मान्न दृष्टमिथ्याज्ञाननिमित्तस्याहंप्रत्ययस्य देहादिसंघाते गौणत्वं कल्पयितुं शक्यम् । न हि श्रुतिशतमपि शीतोऽग्निरप्रकाशो

वेति ध्रुवत्प्रामाण्यमुपैति । यदि ब्रूयाच्छीतोऽग्निरप्रकाशो वेति, तथाप्यर्थान्तरं श्रुतेर्विवक्षितं कल्प्यं, प्रामाण्यान्यथानुपपत्तेः, न तु प्रमाणान्तरविरुद्धं स्ववचनविरुद्धं वा । कर्मणो मिथ्याप्रत्ययवत्कर्तृकत्वात्कर्तुरभावे श्रुतेरप्रामाण्यमिति चेत् । न, ब्रह्मविद्यायामर्थवत्त्वोपपत्तेः ॥

कर्मविधिश्रुतिवत् ब्रह्मविद्याविधिश्रुतेरपि अप्रामाण्यप्रसंग इति चेत् । न, बाधकप्रत्ययानुपपत्तेः । यथा ब्रह्मविद्याविधिश्रुत्या आत्मन्यवगते देहादिसंघातेऽहंप्रत्ययो बाध्यते, तथात्मन्येवात्मावगतिर्न कदाचित्केनचित्कथंचिदपि बाधितुं शक्या, फलाव्यतिरेकादवगतेः, यथाग्निरुष्णः प्रकाशश्चेति । न चैवं कर्मविधिश्रुतेरप्रामाण्यं, पूर्वपूर्वप्रवृत्तिनिरोधेनोत्तरोत्तरापूर्वप्रवृत्तिजननस्य प्रत्यगात्माभिमुख्येन प्रवृत्त्युत्पादनार्थत्वात् । मिथ्यात्वेऽप्युपायस्योपेयसत्यतया सत्यत्वमेव स्यात्, यथा अर्थवादानां विधिशेषाणाम्, लोकेऽपि बालोन्मत्तादीनां पयआदौ पाययितव्ये चूडावर्धनादिवचनम् । प्रकारान्तरस्थानां च साक्षादेव वा प्रामाण्यसिद्धिः, प्रागात्मज्ञानाद्देहाभिमाननिमित्तप्रत्यक्षादिप्रामाण्यवत् । यत्तु मन्यसे—स्वयमव्याप्रियमाणोऽप्यात्मा संनिधिमात्रेण करोति, तदेव च मुख्यं कर्तृत्वमात्मनः, यथा राजा युध्यमानेषु योधेषु युध्यत इति प्रसिद्धं स्वयमयुध्यमानोऽपि संनिधानादेव जितः पराजितश्चेति, तथा सेनापतिर्वाचैव करोति, क्रियाफलसंबंधश्च राज्ञः सेनापतेश्च दृष्टः । यथा ऋत्विक्कर्म यजमानस्य, तथा देहादीनां कर्म आत्मकृतं स्यात् फलस्यात्मगामित्वात् । यथा वा भ्रामकस्य लोहभ्रामयितृत्वादव्यापृतस्यैव मुख्यमेव कर्तृत्वं तथा चात्मन इति । तदसत्, अकुर्वतः कारकत्वप्रसंगात् । कारकमनेकप्रकारमिति चेत् । न, राजप्रभृतीनां मुख्यस्यापि कर्तृत्वस्य दर्शनात् । राजा तावत्स्वव्यापारेणापि युध्यते, योधानां च योधयितृत्वे धनदाने च मुख्यमेव कर्तृत्वं, तथा जयपराजयफलोपभोगे । तथा यजमानस्यापि प्रधानत्यागे दक्षिणादाने च मुख्यमेव कर्तृत्वम् । तस्मादव्यापृतस्य कर्तृत्वोपचारो यः स गौण इत्यवगम्यते । यदि मुख्यं कर्तृत्वं स्वव्यापारलक्षणं नोपलभ्यते राजयजमानप्रभृतीनां, तदा संनि-

धिमात्रेणापि कर्तृत्वं मुख्यं परिकल्प्येत; यथा भ्रामकस्य लोहभ्रमणेन, न तथा राजयजमानादीनां स्वव्यापारो नोपलभ्यते। तस्मात्संनिधिमात्रेण कर्तृत्वं गौणमेव। तथा च सति तत्फलसंबंधोऽपि गौण एव स्यात्। न गौणेन मुख्यं कार्यं निर्वर्त्यते। तस्मादसदेवैतद्गीयते देहादीनां व्यापारेणाव्यापृत आत्मा कर्ता भोक्ता च स्यादिति। भ्रान्तिनिमित्तं तु सर्वमुपपद्यते, यथा स्वप्ने, मायायां चैवम्। न च देहाद्यात्मप्रत्ययभ्रान्तिसंतानविच्छेदेषु सुषुप्तिसमाध्यादिषु कर्तृत्वभोक्तृत्वाद्यनर्थं उपलभ्यते। तस्मात् अभ्रान्तिप्रत्ययनिमित्त एवायं संसारभ्रमो, न तु परमार्थ, इति सम्यग्दर्शनादत्यन्तमेवोपरम इति सिद्धम् ॥६६॥

सर्वगीताशास्त्रार्थमुपसंहृत्य अस्मिन्नध्याये, विशेषतश्चान्ते, इह शास्त्रार्थदार्ढ्याय संक्षेपत उपसंहारं कृत्वा, अथेदानीं शास्त्रसंप्रदायविधिमाह—

इदं ते नातपस्काय नाभक्ताय कदाचन ॥
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥६७॥

इदमिति। इदं शास्त्रं ते तव हिताय मयोक्तं संसारविच्छित्तये अतपस्काय तपोरहिताय न वाच्यमिति व्यवहितेन संबध्यते। तपस्विनेऽप्यभक्ताय गुरुदेवभक्तिरहिताय कदाचन कस्यांचिदप्यवस्थायां न वाच्यम्। भक्तस्तपस्व्यपि सन्नशुश्रूषुर्यो भवति तस्मा अपि न वाच्यम्। न च यो मां वासुदेवं प्राकृतं मनुष्यं मत्वाभ्यसूयत्यात्मप्रशंसादिदोषाध्यारोपणेन ममेश्वरत्वमजानन्न सहते, असावप्ययोग्यः, तस्मा अपि न वाच्यम्। भगवति अनसूयायुक्ताय तपस्विने भक्ताय शुश्रूषवे च वाच्यं शास्त्रमिति सामर्थ्याद्गम्यते। तत्र मेधाविने तपस्विने वा इत्यनयोर्विकल्पदर्शनात् शुश्रूषाभक्तियुक्ताय तपस्विने तद्युक्ताय मेधाविने वा वाच्यम्। शुश्रूषाभक्तिवियुक्ताय न तपस्विने नापि मेधाविने वाच्यम्। भगवत्यसूयायुक्ताय समस्तगुणवतेऽपि न वाच्यम्। गुरुशुश्रूषाभक्तिमते च वाच्यमित्येषः शास्त्रसंप्रदायविधिः ॥६७॥

संप्रदायस्य कर्तुः फलमिदानीमाह—

य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ।।६८।।

य इममिति । य इमं यथोक्तं परमं निःश्रेयसार्थं केशवार्जुनयोः संवादरूपं ग्रंथं गुह्यं गोप्यं मद्भक्तेषु मयि भक्तिमत्स्वभिधास्यति वक्ष्यति, ग्रंथतोऽर्थतश्च स्थापयिष्यतीत्यर्थः, यथा त्वयि मया । भक्तेः पुनर्ग्रहणात् भक्तिमात्रेण केवलेन शास्त्रसंप्रदाने पात्रं भवतीति गम्यते । कथमभिधास्यतीत्युच्यते भक्तिं मयि परां कृत्वा भगवतः परमगुरोः अच्युतस्य शुश्रूषा मया क्रियते इत्येवं कृत्वेत्यर्थः । तस्येदं फलं मामेवैष्यति मुच्यते एव असंशयः अत्र संशयो न कर्तव्यः ।।६८।।

किंच—

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ।।६९।।

न चेति । न च तस्माच्छास्त्रसंप्रदायकृतो मनुष्येषु मनुष्याणां मध्ये कश्चिन्मे मम प्रियकृत्तमोऽतिशयेन प्रियकृत्तरोऽन्यः प्रियकृत्तमो, नास्त्येवेत्यर्थो वर्तमानेषु । न च भविता भविष्यत्यपि काले तस्मात् द्वितीयोऽन्यः प्रियतरो प्रियकृत्तरः भुवि लोकेऽस्मिन् ।।६९।।

योऽपि—

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ।।७०।।

अध्येष्यते इति । अध्येष्यते च पठिष्यति य इमं धर्म्यं धर्मादनपेतं संवादरूपं ग्रंथमावयोः, तेनेदं कृतं स्यात्— ज्ञानयज्ञेन विधिजपोपांशुमानसानां यज्ञानां ज्ञानयज्ञो मानसत्वाद्विशिष्टतम इत्यतस्तेन ज्ञानयज्ञेन गीताशास्त्रस्याध्ययनं स्तूयते । फलविधिरेव वा, देवतादिविषयज्ञानयज्ञफलतुल्यं अस्य फलं भवतीति । तेनाध्ययनेनाहमिष्टः पूजितः स्यां भवेयमिति मे मम मतिर्निश्चयः ।।७०।।

अथ श्रोतुरिदं फलम्—

**श्रद्धावाननसूयश्च शृणुयादपि यो नरः ॥**
**सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥**

श्रद्धावानिति । श्रद्धावाञ्श्रद्दधानोऽनसूयश्चासूयावर्जितः सन्निमं ग्रंथं शृणुयादपि यो नरः अपिशब्दात्किमुतार्थज्ञानवान्सोऽपि पापान्मुक्तः शुभान्प्रशस्तान् लोकान्प्राप्नुयात्पुण्यकर्मणामग्निहोत्रादिकर्मवताम् ॥७१॥

शिष्यस्य शास्त्रार्थग्रहणाग्रहणविवेकबुभुत्सया पृच्छति । तदग्रहणे ज्ञाते पुनर्ग्राहयिष्याम्युपायान्तरेणापीति प्रष्टुरभिप्रायः । यत्नान्तरमास्थाय शिष्यः कृतार्थः कर्तव्य इत्याचार्यधर्मः प्रदर्शितो भवति—

**कच्चिदेतत् श्रुतं पार्थ त्वयैकाग्रेण चेतसा ॥**
**कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनंजय ॥७२॥**

कच्चिदिति । कच्चित्किमेतन्मयोक्तं श्रुतं श्रवणेनावधारितं पार्थ, त्वयैकाग्रेण चेतसा चित्तेन, किंवा अप्रमादतः । कच्चिदज्ञानसंमोहोऽज्ञाननिमित्तः संमोहो विचित्तभावः अविवेकः स्वाभाविकः किं प्रणष्टः? यदर्थोऽयं शास्त्रश्रवणायासस्तव, मम चोपदेष्टृत्वायासः प्रवृत्तः, ते तव धनंजय ॥७२॥

**अर्जुन उवाच ।**

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ॥**
**स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥७३॥**

नष्ट इति । नष्टो मोहोऽज्ञानजः समस्तसंसारानर्थहेतुः सागर इव दुस्तरः । स्मृतिश्चात्मतत्त्वविषया लब्धा, यस्या लाभात्सर्वग्रंथीनां विप्रमोक्षः, त्वत्प्रसादात्तव प्रसादान्मया त्वत्प्रसादमाश्रितेनाच्युत । अनेन मोहनाशप्रश्नप्रतिवचनेन सर्वशास्त्रार्थज्ञानफलमेतावदेवेति निश्चितं दर्शितं भवति, यतः ज्ञानात् मोहनाश आत्मस्मृतिलाभश्चेति । तथाच श्रुतौ अनात्मविच्छोचामीत्युपन्यस्य आत्मज्ञानेन सर्वग्रंथीनां विप्रमोक्ष उक्तः । "भिद्यते हृदयग्रंथिः" [मुं.२.२.८] "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" [ईश.७] इति

च मंत्रवर्णः। अथेदानीं त्वच्छासने स्थितोऽस्मि गतसंदेहो मुक्तसंशयः। करिष्ये वचनं तव अहं त्वत्प्रसादात्कृतार्थो, न मम कर्तव्यमस्तीत्यभिप्रायः ॥७३॥

परिसमाप्तः। शास्त्रार्थः अथेदानीं कथासंबंधप्रदर्शनार्थं संजय उवाच—

संजय उवाच ।

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ॥
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥७४॥

इत्यहमिति । इत्येवमहं वासुदेवस्य पार्थस्य च महात्मनः संवादमिमं यथोक्तमश्रौषं श्रुतवानस्मि अद्भुतमत्यंतविस्मयकरं रोमहर्षणं रोमांचकरम् ॥७४॥

तं चेमम्—

व्यासप्रसादात् श्रुतवानिमं गुह्यतमं परम् ॥
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥७५॥

व्यासेति । व्यासप्रसादात् ततो दिव्यचक्षुर्लाभात् श्रुतवानिमं संवादं गुह्यतमं परं योगं, योगार्थत्वात् ग्रंथोऽपि योगः, संवादमिमं योगमेव वा योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयं न परंपरया ॥७५॥

राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ॥
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥७६॥

राजन्निति । हे राजन्धृतराष्ट्र, संस्मृत्य संस्मृत्य संवादमिममद्भुतं केशवार्जुनयोः पुण्यं इमं श्रवणादपि पापहरं श्रुत्वा हृष्यामि च मुहुर्मुहुः प्रतिक्षणम् ॥७६॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ॥
विस्मयो मे महान् राजन्हृष्यामि च पुनः पुनः ॥७७॥

तच्चेति । तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेर्विश्वरूपं विस्मयो मे महान् हे राजन्, हृष्यामि च पुनः पुनः ॥७७॥

किं बहुना—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः ॥१८॥

यत्रेति । यत्र यस्मिन्पक्षे योगेश्वरः सर्वयोगानामीश्वरः तत्प्रभवत्वात्सर्वयोगबीजस्य, कृष्णो, यत्र पार्थो यस्मिन्पक्षे धनुर्धरो गाण्डीवधन्वा, तत्र श्रीस्तस्मिन्पांडवानां पक्षे विजयः तत्रैव भूतिः श्रियो विशेषो विस्तारो भूतिः ध्रुवा अव्यभिचारिणी नीतिर्नयः; इत्येवं मतिर्ममेति ॥७८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः ॥१८॥

इति श्रीमद्भगवद्गीताशास्त्रं समाप्तम् ।

## श्रीमद्भगवद्गीताश्लोकाद्यचरणप्रतीकवर्णानुक्रमः।


अ.

अकीर्तिं चापि भूतानि २.३४
अक्षरं ब्रह्म परमम् ८. ३
अक्षराणामकारोऽस्मि १०.३३
अग्निर्ज्योतिरहः शुक्लः ८.२४
अच्छेद्योऽयमदाह्योऽयम् २.२४
अजोऽपि सन्नव्ययात्मा ४. ६
अज्ञश्चाश्रद्दधानश्च ४.४०
अत्र शूरा महेष्वासाः १. ४
अथ केन प्रयुक्तोऽयम् ३.३६
अथ चित्तं समाधातुम् १२. ९
अथ चेत्त्वमिमं धर्म्यम् २.३३
अथ चैनं नित्यजातम् २.२६
अथवा योगिनामेव ६.४२
अथवा बहुनैतेन १०.४२
अथ व्यवस्थितान्दृष्ट्वा १.२०
अथैतदप्यशक्तोऽसि १२.११
अदृष्टपूर्वं हृषितोऽस्मि ११.४५
अदेशकाले यद्दानम् १७.२२
अद्वेष्टा सर्वभूतानाम् १२.१३
अधर्मं धर्ममिति या १८.३२
अधर्माभिभवात्कृष्ण १.४१
अधश्चोर्ध्वं प्रसृतास्तस्य १५. २
अधिभूतं क्षरो भावः ८. ४
अधियज्ञः कथं कोऽत्र ८. २
अधिष्ठानं तथा कर्ता १८.१४
अध्यात्मज्ञाननित्यत्वम् १३.११
अध्येष्यते च य इमम् १८.७०
अनंतविजयं राजा १.१६
अनंतश्चास्मि नागानाम् १०.२९
अनन्यचेताः सततम् ८.१४
अनन्याश्चिन्तयन्तो माम् ९.२२
अनपेक्षः शुचिर्दक्षः १२.१६
अनादित्वान्निर्गुणत्वात् १३.३१
अनादिमध्यान्तमनन्त ११.१९
अनाश्रितः कर्मफलम् ६. १
अनिष्टमिष्टं मिश्रं च १८.१२
अनुद्वेगकरं वाक्यम् १७.१५
अनुबंधं क्षयं हिंसाम् १८.२५
अनेकचित्तविभ्रान्ताः १६.१६
अनेकबाहूदरवक्त्रनेत्रम् ११.१६
अनेकवक्त्रनयनम् ११.१०
अन्तकाले च मामेव ८. ५
अन्तवत्तु फलं तेषाम् ७.२३
अन्तवन्त इमे देहाः २.१८
अन्नाद्भवन्ति भूतानि ३.१४
अन्ये च बहवः शूराः १. ९
अन्ये त्वेवमजानन्तः १३.२५
अपरं भवतो जन्म ४. ४
अपरे नियताहाराः ४.३०
अपरेयमितस्त्वन्याम् ७. ५
अपर्याप्तं तदस्माकम् १.१०

| | | | |
|---|---|---|---|
| अपाने जुह्वति प्राणम् | ४.२९ | असक्तबुद्धिः सर्वत्र | १८.४९ |
| अपि चेत्सुदुराचारो | ९.३० | असक्तिरनभिष्वंगः | १३. ९ |
| अपि चेदसि पापेभ्यः | ४.३६ | असत्यमप्रतिष्ठं ते | १६. ८ |
| अप्रकाशोऽप्रवृत्तिश्च | १४.१३ | असौ मया हतः शत्रुः | १६.१४ |
| अफलाकांक्षिभिर्यज्ञो | १७.११ | असंयतात्मना योगो | ६.३६ |
| अभयं सत्त्वसंशुद्धिः | १६. १ | असंशयं महाबाहो | ६.३५ |
| अभिसंधाय तु फलम् | १७.१२ | अस्माकं तु विशिष्टा ये | १. ७ |
| अभ्यासयोगयुक्तेन | ८. ८ | अहं क्रतुरहं यज्ञः | ९.१६ |
| अभ्यासेऽप्यसमर्थोऽसि | १२.१० | अहंकारं बलं दर्पम् | १६.१८ |
| अमानित्वमदंभित्वम् | २३. ७ | ,, ,, ,, | १८.५३ |
| अमी च त्वां धृतराष्ट्रस्य | ११.२६ | अहमात्मा गुडाकेश | १०.२० |
| अमी हि त्वां सुरसंघाः | ११.२१ | अहं वैश्वानरो भूत्वा | १५.१४ |
| अयनेषु च सर्वेषु | १.११ | अहं सर्वस्य प्रभवो | १०. ८ |
| अयतिः श्रद्धयोपेतो | ६.३७ | अहं हि सर्वयज्ञानाम् | ९.२४ |
| अयुक्तः प्राकृतः स्तब्धः | १८.२८ | अहिंसा सत्यमक्रोधः | १६. २ |
| अवजानन्ति मां मूढाः | ९.११ | अहिंसा समता तुष्टिः | १०. ५ |
| अवाच्यवादांश्च बहून् | २.३६ | अहो बत महत्पापम् | १.४५ |
| अविनाशि तु तद्विद्धि | २.१७ | **आ.** | |
| अविभक्तं च भूतेषु | १३.१६ | आख्याहि मे को भवान् | ११.३१ |
| अव्यक्तादीनि भूतानि | २.२८ | आचार्याः पितरः पुत्राः | १.३४ |
| अव्यक्ताद्व्यक्तयः सर्वाः | ८.१८ | आढ्योऽभिजनवानस्मि | १६.१५ |
| अव्यक्तोऽक्षर इत्युक्तः | ८.२१ | आत्मसंभाविताः स्तब्धाः | १६.१७ |
| अव्यक्तोऽयमचिन्त्योऽ० | २.२५ | आत्मौपम्येन सर्वत्र | ६.३२ |
| अव्यक्तं व्यक्तिमापन्नम् | ७.२४ | आदित्यानामहं विष्णुः | १०.२१ |
| अशास्त्रविहितं घोरम् | १७. ५ | आपूर्यमाणमचल० | २.७० |
| अशोच्यानन्वशोचस्त्वम् | २.११ | आब्रह्मभुवनाल्लोकाः | ८.१६ |
| अश्रद्दधानाः पुरुषाः | ९. ३ | आयुधानामहं वज्रम् | १०.२८ |
| अश्रद्धया हुतं दत्तम् | १७.२८ | आयुःसत्त्वबलारोग्य० | १७. ८ |
| अश्वत्थः सर्ववृक्षाणाम् | १०.२६ | आरुरुक्षोर्मुनेर्योगम् | ६. ३ |

आवृतं ज्ञानमेतेन ३.३९
आशापाशशतैर्बद्धाः १६.१२
आश्चर्यवत्पश्यति २.२९
आसुरी योनिमापन्नाः १६.२०
आहारस्त्वपि सर्वस्य १७. ७
आहुस्त्वामृषयः सर्वे १०.१३

इ.

इच्छाद्वेषसमुत्थेन ७.२७
इच्छा द्वेषः सुखम् १३. ६
इति गुह्यतमं शास्त्रम् १५.२०
इति ते ज्ञानमाख्यातम् १८.६३
इति क्षेत्रं तथा ज्ञानम् १३.१८
इत्यर्जुनं वासुदेवः ११.५०
इत्यहं वासुदेवस्य १८.७४
इदमद्य मया लब्धम् १६.१३
इदं तु ते गुह्यतमम् ९. १
इदं ते नातपस्काय १८.६७
इदं शरीरं कौन्तेय १३. १
इदं ज्ञानमुपाश्रित्य १४. २
इंद्रियस्येंद्रियस्यार्थे ३.३४
इंद्रियाणां हि चरताम् २.६७
इंद्रियाणि पराण्याहुः ३.४२
इंद्रियाणि मनो बुद्धिः ३.४०
इंद्रियार्थेषु वैराग्यम् १३. ८
इमं विवस्वते योगम् ४. १
इष्टान्भोगान्हि ३.१२
इहैकस्थं जगत्कृत्स्नम् ११. ७
इहैव तैर्जितः सर्गः ५.१९

ई.

ईश्वरः सर्वभूतानाम् १८.६१

उ.

उच्चैःश्रवसमश्वानाम् १०.२७
उत्क्रामंतं स्थितं वाऽपि १५.१०
उत्तमः पुरुषस्त्वन्यः १५.१७
उत्सन्नकुलधर्माणाम् १.४४
उत्सीदेयुरिमे लोकाः ३.२४
उदाराः सर्व एवैते ७.१८
उदासीनवदासीनः १४.२३
उद्धरेदात्मनाऽऽत्मानम् ६. ५
उपद्रष्टाऽनुमंता च १३.२२

ऊ.

ऊर्ध्वं गच्छन्ति सत्त्वस्थाः १४.१८
ऊर्ध्वमूलमधःशाखम् १५. १

ऋ.

ऋषिभिर्बहुधा गीतम् १३. ४

ए.

एतच्छ्रुत्वा वचनं केश० ११.३५
एतद्योनीनि भूतानि ७. ६
एतन्मे संशयं कृष्ण ६.३९
एतान्न हंतुमिच्छामि १.३५
एतान्यपि तु कर्माणि १८. ६
एतां दृष्टिमवष्टभ्य १६. ९
एतां विभूतिं योगं च १०. ७
एतैर्विमुक्तः कौंतेय १६.२२
एवमुक्तो हृषीकेशः १.२४
एवमुक्त्वाऽर्जुनः संख्ये १.४७

| | |
|---|---|
| एवमुक्त्वा ततो राजन् | ११. ९ |
| एवमुक्त्वा हृषीकेशम् | २. ९ |
| एवमेतद्यथात्थ त्वम् | ११. ३ |
| एवं परंपराप्राप्तम् | ४. २ |
| एवं प्रवर्तितं चक्रम् | ३.१६ |
| एवं बहुविधा यज्ञाः | ४.३२ |
| एवं बुद्धेः परं बुद्ध्वा | ३.४३ |
| एवं सततयुक्ता ये | १२. १ |
| एवं ज्ञात्वा कृतं कर्म | ४.१५ |
| एषा तेऽभिहिता सांख्ये | २.३९ |
| एषा ब्राह्मी स्थितिः पार्थ | २.७२ |

**ओं.**

| | |
|---|---|
| ओमित्येकाक्षरं ब्रह्म | ८.१३ |
| ॐ तत्सदिति निर्देशो | १७.२३ |

**क.**

| | |
|---|---|
| कच्चिन्नोभयविभ्रष्टः | ६.३८ |
| कच्चिदेतच्छ्रुतं पार्थ | १८.७२ |
| कट्वम्ललवणात्युष्ण० | १७. ९ |
| कथं न ज्ञेयमस्माभिः | १.३९ |
| कथं भीष्ममहं संख्ये | २. ४ |
| कथं विद्यामहं योगिन् | १०.१७ |
| कर्मजं बुद्धियुक्ता हि | २.५१ |
| कर्मणः सुकृतस्याहुः | १४.१६ |
| कर्मणैव हि संसिद्धिम् | ३.२० |
| कर्मणो ह्यपि बोद्धव्यम् | ४.१७ |
| कर्मण्यकर्म यः पश्येत् | ४.१८ |
| कर्मण्येवाधिकारस्ते | २.४७ |
| कर्म ब्रह्मोद्भवं विद्धि | ३.१५ |
| कर्मेंद्रियाणि संयम्य | ३. ६ |
| कर्षयंतः शरीरस्थम् | १७. ६ |
| कविं पुराणमनुशा० | ८. ९ |
| कस्माच्च ते न नमेरन् | ११.३७ |
| कांक्षंतः कर्मणां सिद्धिम् | ४.१२ |
| काम एष क्रोध एष | ३.३७ |
| कामक्रोधवियुक्तानाम् | ५.२६ |
| काममाश्रित्य दुष्पूरम् | १६.१० |
| कामात्मानः स्वर्गपराः | २.४३ |
| कामैस्तैस्तैर्हृतज्ञानाः | ७.२० |
| काम्यानां कर्मणां | १८. २ |
| कायेन मनसा बुद्ध्या | ५.११ |
| कार्पण्यदोषोपहत० | २. ७ |
| कार्यकरणकर्तृत्वे | १३.२० |
| कार्यमित्येव यत्कर्म | १८. ९ |
| कालोऽस्मि लोकक्षय० | ११.३२ |
| काश्यश्च परमेष्वासः | १.१७ |
| किरीटिनं गदिनं चक्र० | ११.४६ |
| किरीटिनं गदिनं चक्रि० | ११.१७ |
| किं कर्म किमकर्मेति | ४.१६ |
| किं तद्ब्रह्म किमध्यात्मम् | ८. १ |
| किं पुनर्ब्राह्मणाः पुण्याः | ९.३३ |
| कुतस्त्वा कश्मलमिदम् | २. २ |
| कुलक्षये प्रणश्यंति | १.४० |
| कृपया परयाविष्टो | १.२८ |
| कृषिगौरक्ष्यवाणिज्यम् | १८.४४ |
| कैर्लिंगैस्त्रीन्गुणानेतान् | १४.२१ |
| क्रोधाद्भवति संमोहः | २.६३ |
| क्लेशोऽधिकतरस्तेषाम् | १२. ५ |

क्लैब्यं मा स्म गमः पार्थ २. ३
क्षिप्रं भवति धर्मात्मा ९.३१
क्षेत्रक्षेत्रज्ञयोरेवम् १३.३४
क्षेत्रज्ञं चापि मां विद्धि १३. २

ग.

गतसंगस्य मुक्तस्य ४.२३
गतिर्भर्ता प्रभुः साक्षी ९.१८
गांडीवं स्रंसते हस्तात् १.३०
गामाविश्य च भूतानि १५.१३
गुणानेतानतीत्य त्रीन् १४.२०
गुरूनहत्वा हि महानु० २. ५

च.

चंचलं हि मनः कृष्ण ६.३४
चतुर्विधा भजन्ते माम् ७.१६
चातुर्वर्ण्यं मया सृष्टम् ४.१३
चिंतामपरिमेयां च १६.११
चेतसा सर्वकर्माणि १८.५७

ज.

जन्म कर्म च मे दिव्यम् ४. २
जरामरणमोक्षाय ७.२९
जातस्य हि ध्रुवो मृत्युः २.२०
जितात्मनः प्रशान्तस्य ६. ७
ज्ञानयज्ञेन चाप्यन्ये ९.१५
ज्ञानविज्ञानतृप्तात्मा ६. ८
ज्ञानेन तु तदज्ञानम् ५.१६
ज्ञानं कर्म च कर्ता च १८.१९
ज्ञानं तेऽहं सविज्ञानम् ७. २
ज्ञानं ज्ञेयं परिज्ञाता १८.१८
ज्ञेयः स नित्यसंन्यासी ५. ३
ज्ञेयं यत्तत्प्रवक्ष्यामि १३.१२
ज्यायसी चेत्कर्मणस्ते ३. १
ज्योतिषामपि तज्ज्यो० १३.१७

त.

ततः पदं तत्परिमा० १५. ४
तच्च संस्मृत्य संस्मृत्य १८.७७
ततः शंखाश्च भेर्यश्च १.१३
ततः श्वेतैर्हयैर्युक्ते १.१४
ततः स विस्मयाविष्टो ११.१४
तत्त्ववित्तु महाबाहो ३.२८
तत्र तं बुद्धिसंयोगम् ६.४३
तत्र सत्त्वं निर्मलत्वात् १४. ६
तत्रापश्यत्स्थितान्पार्थः १.२६
तत्रैकस्थं जगत्कृत्स्नम् ११.१३
तत्रैकाग्रं मनः कृत्वा ६.१२
तत्रैवं सति कर्तारम् १८.१६
तत्क्षेत्रं यच्च यादृक्च १३. ३
तदित्यनभिसंधाय १७.२५
तद्बुद्धयस्तदात्मानः ५.१७
तद्विद्धि प्रणिपातेन ४.३४
तपस्विभ्योऽधिको योगी ६.४६
तपाम्यहमहं वर्षम् ९.१९
तमस्त्वज्ञानजं विद्धि १४. ८
तमुवाच हृषीकेशः २.१०
तमेव शरणं गच्छ १८.६२
तस्माच्छास्त्रं प्रमाणं ते १६.२४
तस्मात्प्रणम्य प्रणिधाय ११.४४
तस्मात्त्वमिंद्रियाण्यादौ ३.४१
तस्मात्त्वमुत्तिष्ठ यशो० ११.१३

| | | | |
|---|---|---|---|
| तस्मात्सर्वेषु कालेषु | ८. ७ | दंभो दर्पोऽभिमानश्च | १६. ४ |
| तस्मादसक्तः सततम् | ३.१९ | दंष्ट्राकरालानि च ते | ११.२५ |
| तस्मादज्ञानसंभूतम् | ४.४२ | दातव्यमिति यद्दानम् | १७.२० |
| तस्मादोमित्युदाहृत्य | १७.२४ | दिवि सूर्यसहस्रस्य | ११.१२ |
| तस्माद्यस्य महाबाहो | २.६८ | दिव्यमाल्यांबरधरम् | ११.११ |
| तस्मान्नार्हा वयं हन्तुम् | १.३७ | दुःखमित्येव यत्कर्म | १८. ८ |
| तस्य संजनयन्हर्षम् | १.१२ | दुःखेष्वनुद्विग्नमनाः | २.५६ |
| तं विद्यात् दुःखसंयोगम् | ६.२३ | दूरेण ह्यवरं कर्म | २.४९ |
| तं तथा कृपयाविष्टम् | २. १ | दृष्ट्वा तु पांडवानीकम् | १. २ |
| तानहं द्विषतः क्रूरान् | १६.१९ | दृष्ट्वेदं मानुषं रूपम् | ११.५१ |
| तानि सर्वाणि संयम्य | २.६१ | देवद्विजगुरुप्राज्ञ० | १७.१४ |
| तुल्यनिंदास्तुतिर्मौनी | १२.१९ | देवान्भावयतानेन | ३.११ |
| तेजः क्षमा धृतिः शौ० | १६. ३ | देही नित्यमवध्योऽयम् | २.३० |
| ते तं भुक्त्वा स्वर्गलोकम् | ९.२१ | देहिनोऽस्मिन्यथा देहे | २.१३ |
| तेषामहं समुद्धर्ता | १२. ७ | दैवमेवापरे यज्ञम् | ४.२५ |
| तेषामेवानुकम्पार्थम् | १०.११ | दैवी ह्येषा गुणमयी | ७.१४ |
| तेषां सततयुक्तानाम् | १०.१० | दैवी संपद्विमोक्षाय | १६. ५ |
| तेषां ज्ञानी नित्ययुक्तः | ७.१७ | दोषैरेतैः कुलघ्नानाम् | १.४३ |
| त्यक्त्वा कर्मफलासंगम् | ४.२० | द्यावापृथिव्योरिद० | ११.२० |
| त्याज्यं दोषवदित्येके | १८. ३ | द्यूतं छलयतामस्मि | १०.३६ |
| त्रिभिर्गुणमयैर्भावैः | ७.१३ | द्रव्ययज्ञास्तपोयज्ञाः | ४.२८ |
| त्रिविधा भवति श्रद्धा | १७. २ | द्रुपदो द्रौपदेयाश्च | १.१८ |
| त्रिविधं नरकस्येदम् | १६.२१ | द्रोणं च भीष्मं च | ११.३४ |
| त्रैगुण्यविषया वेदाः | २.४५ | द्वाविमौ पुरुषौ लोके | १५.१६ |
| त्रैविद्या मां सोमपाः | ९.२० | द्वौ भूतसर्गौ लोके | १६. ६ |
| त्वमक्षरं परमं वेदि० | ११.१८ | धर्मक्षेत्रे कुरुक्षेत्रे | १. १ |
| त्वमादिदेवः पुरुषः | ११.३८ | धूमो रात्रिस्तथा कृष्णः | ८.२५ |
| द. | | धूमेनाव्रियते वह्निः | ३.३८ |
| दंडो दमयतामस्मि | १०.३८ | धृत्या यया धारयते | १८.३३ |

धृष्टकेतुश्चेकितानः १. ५
ध्यानेनात्मनि पश्य० १३.२४
ध्यायतो विषयान्पुंसः २.६२

**न.**

न कर्तृत्वं न कर्माणि ५.१४
न कर्मणामनारंभात् ३. ४
न कांक्षे विजयं कृष्ण १.३२
न च तस्मान्मनुष्येषु १८.६९
न च मत्स्थानी भूतानि ९. ५
न च मां तानि कर्माणि ९. ९
न चैतद्विद्मः कतरन्नो २. ६
न जायते म्रियते वा २.२०
न तदस्ति पृथिव्यां वा १८.४०
न तद्भासयते सूर्यो १५. ६
न तु मां शक्यसे द्रष्टुम् ११. ८
न त्वेवाहं जातु नासम् २.१२
न द्वेष्ट्यकुशलं कर्म १८.१०
न प्रहृष्येत्प्रियं प्राप्य ५.२०
न बुद्धिभेदं जनयेत् ३.२६
नभःस्पृशं दीप्तमने० ११.२४
नमः पुरस्तादथ पृष्ठ० ११.४०
न मां कर्माणि लिंपन्ति ४.१४
न मां दुष्कृतिनो मूढाः ७.१५
न मे पार्थास्ति कर्त० ३.२२
न मे विदुः सुरगणाः १०. २
न रूपमस्येह तथो० १५. ३
न वेदयज्ञाध्ययनैः ११.४८
नष्टो मोहः स्मृतिर्लब्धा १८.७३
नहि कश्चित्क्षणमपि ३. ५
न हि देहभृता शक्यम् १८.११
न हि प्रपश्यामि ममा० २. ८
न हि ज्ञानेन सदृशम् ४.३८
नात्यश्नतस्तु योगोऽस्ति ६.१६
नादत्ते कस्यचित्पापम् ५.१५
नान्तोऽस्ति मम दि० १०.४०
नान्यं गुणेभ्यः कर्तारम् १४.१९
नासतो विद्यते भावः २.१६
नास्ति बुद्धिरयुक्तस्य २.६६
नाहं प्रकाशः सर्वस्य ७.२५
नाहं वेदैर्न तपसा ११.५३
निमित्तानि च पश्यामि १.३१
नियतस्य तु संन्यासः १८. ७
नियतं कुरु कर्म त्वम् ३. ८
नियतं संगरहितम् १८.२३
निराशीर्यतचित्तात्मा ४.२१
निर्मानमोहा जितसंग० १५.५
निश्चयं शृणु मे तत्र १८. ४
निहत्य धार्तराष्ट्रान्नः १.३६
नेहाभिक्रमनाशोऽस्ति २.४०
नैते सृती पार्थ जानन् ८.२७
नैनं छिन्दन्ति शस्त्राणि २.२३
नैव किंचित्करोमीति ५. ८
नैव तस्य कृतेनार्थो ३.१८

**प.**

पञ्चैतानि महाबाहो १८. ३
पत्रं पुष्पं फलं तोयम् ९.२६
परस्तस्मात्तु भावोऽन्यो ८.२०
परं ब्रह्म परं धाम १०.२२

| | |
|---|---|
| परं भूयः प्रवक्ष्यामि | १४. १ |
| परित्राणाय साधूनाम् | ४. ८ |
| पवनः पवतामस्मि | १०.३१ |
| पश्य मे पार्थ रूपाणि | ११. ५ |
| पश्यादित्यान्वसू० | ११.६ |
| पश्यामि देवांस्तव देव | ११.१५ |
| पश्यैतां पांडुपुत्राणाम् | १. ३ |
| पांचजन्यं हृषीकेशो | १.१५ |
| पार्थ नैवेह नामुत्र | ६.४० |
| पितासि लोकस्य चरा | ११.४३ |
| पिताहमस्य जगतो | ९.१७ |
| पुण्यो गंधः पृथिव्यां च | ७. ९ |
| पुरुषः प्रकृतिस्थो हि | १३.२१ |
| पुरुषः स परः पार्थ | ८.२२ |
| पुरोधसां च मुख्यं मां | १०.२४ |
| पूर्वाभ्यासेन तेनैव | ६.४४ |
| पृथक्त्वेन तु यज्ज्ञानम् | १८.२१ |
| प्रकाशं च प्रवृत्तिं च | १४.२२ |
| प्रकृतिं स्वामवष्टभ्य | ९ ८ |
| प्रकृतेः क्रियमाणानि | ३.२७ |
| प्रकृतेर्गुणसंमूढः | ३.२९ |
| प्रकृत्यैव च कर्माणि | १३.२९ |
| प्रजहाति यदा कामान् | २.५५ |
| प्रयत्नाद्यतमानस्तु | ६.४५ |
| प्रयाणकाले मनसा | ८.१० |
| प्रलपन्विसृजन्गृह्णन् | ५. ९ |
| प्रवृत्तिं च निवृत्तिं च | १६. ७ |
| ,, ,, ,, | १८.३० |
| प्रशान्तमनसं ह्येनम् | ६.२७ |
| प्रशांतात्मा वितगभीः | ६.१४ |
| प्रसादे सर्वदुःखानाम् | २.६५ |
| प्रह्लादश्चास्मि दैत्या० | १०.३० |
| प्राप्य पुण्यकृतां लो० | ६.४१ |
| ब. | |
| बंधुरात्मान्मनस्तस्य | ६. ६ |
| बलं बलवतां चाहम् | ७.११ |
| बहिरंतश्च भूतानाम् | १३.१५ |
| बहूनां जन्मनामन्ते | ७.१९ |
| बहूनि मे व्यतीतानि | ४. ५ |
| बाह्यस्पर्शेष्वसक्तात्मा | ५.२१ |
| बीजं मां सर्वभूतानां | ७.१० |
| बुद्धियुक्तो जहातीह | २.५० |
| बुद्धिर्ज्ञानमसंमोहः | १०. ४ |
| बुद्धेर्भेदं धृतेश्चैव | १८.२९ |
| बुद्ध्या विशुद्धया युक्तो | १८.५१ |
| बृहत्साम तथा साम्नाम् | १०.३५ |
| ब्रह्मणो हि प्रतिष्ठाऽहम् | १४.२७ |
| ब्रह्मण्याधाय कर्माणि | ५.१० |
| ब्रह्मभूतः प्रसन्नात्मा | १८.१४ |
| ब्रह्मार्पणं ब्रह्म हविः | ४.२४ |
| ब्राह्मणक्षत्रियविशाम् | १८.४१ |
| भ. | |
| भक्त्या त्वनन्यया शक्य | ११.५४ |
| भक्त्या मामभिजानाति | १८.५५ |
| भयाद्रणादुपरतम् | २.३५ |
| भवान्भीष्मश्च कर्णश्च | १. ८ |
| भवाप्ययौ हि भूतानाम् | ११. २ |
| भीष्मद्रोणप्रमुखतः | १.२५ |

भूतग्रामः स एवायम् ८.१९
भूमिरापोऽनलो वायुः ७. ४
भूय एव महाबाहो १०. १
भोक्तारं यज्ञतपसाम् ५.२९
भोगैश्वर्यप्रसक्तानाम् २.४४

म.

मच्चित्तः सर्वदुर्गाणि १८.५८
मच्चित्ता मद्गतप्राणाः १०. ९
मत्कर्मकृन्मत्परमो ११.५५
मत्तः परतरं नान्यत् ७. ७
मदनुग्रहाय परमम् ११. १
मनःप्रसादः सौम्यत्वम् १७.१६
मनुष्याणां सहस्रेषु ७. ३
मन्मना भव मद्भक्तो ९.३४
,, ,, ,, १८.६५
मन्यसे यदि तच्छक्यम् ११. ४
मम योनिर्महद्ब्रह्म १४. ३
ममैवांशो जीवलोके १५. ७
मया ततमिदं सर्वम् ९. ४
मयाध्यक्षेण प्रकृतिः ९.१०
मया प्रसन्नेन तवा० ११.४७
मयि चानन्ययोगेन १३.१०
मयि सर्वाणि कर्माणि ३.३०
मय्यावेश्य मनो ये माम् १२. २
मय्यासक्तमनाः पार्थ ७. १
मय्येव मन आधत्स्व १२. ८
महर्षयः सप्त पूर्वे १०. ६
महर्षीणां भृगुरहम् १०.२५
महात्मानस्तु मां पार्थ ९.१३
महाभूतान्यहंकारो १३. ५
मा ते व्यथा मा च ११.४९
मात्रास्पर्शास्तु कौन्तेय २.१४
मानापमानयोस्तुल्यः १४.२५
मामुपेत्य पुनर्जन्म ८.१५
मां च योऽव्यभिचारेण १४.२६
मां हि पार्थ व्यपाश्रित्य ९.३२
मुक्तसंगोऽनहंवादी १८.२६
मूढग्राहेणात्मनो यत् १७.१९
मृत्युः सर्वहरश्चाहम् १०.३४
मोघाशा मोघकर्माणो ९.१२

य.

य एवं परमं गुह्यम् १८.६८
य एनं वेत्ति हन्तारम् २.१९
य एवं वेत्ति पुरुषम् १३.२३
यच्चापि सर्वभूतानाम् १०.३९
यच्चावहासार्थमस० ११.४२
यजन्ते सात्त्विका देवा० १७ ४
यज्ञो दानं तपः कर्म १८. ५
यज्ञशिष्टामृतभुजो ४.३१
यज्ञशिष्टाशिनः सन्तो ३.१३
यज्ञार्थात्कर्मणोऽन्यत्र ३. ९
यज्ञे तपसि दाने च १७.२७
यज्ज्ञात्वा न पुनर्मोहम् ४.३५
यततो ह्यपि कौंतेय २.६०
यतन्तो योगिनश्चैनम् १५.११
यतः प्रवृत्तिर्भूतानाम् १८.४६
यतेंद्रियमनोबुद्धिः ५.२८
यतो यतो निश्चरति ६.२६

यत्करोषि यदश्नासि ९.२७
यत्तदग्रे विषमिव १८.३७
यत्तु कामेप्सुना-कर्म १८.२४
यत्तु कृत्स्नवदेकस्मिन् १८.२२
यत्तु प्रत्युपकारार्थम् १७.२१
यत्र काले त्वनावृत्तिम् ८.२३
यत्र योगेश्वरः कृष्णो १८.७८
यत्रोपरमते चित्तम् ६.२०
यत्सांख्यैः प्राप्यते ५. ५
यथाकाशस्थितो नित्यम् ९. ६
यथा दीपो निवातस्थो ६.१९
यथा नदीनां बहवोऽ० ११.२८
यथा प्रकाशयत्येकः १३.३३
यथा प्रदीप्तं ज्वलनम् ११.२९
यथा सर्वगतं सौक्ष्म्यात् १३.३२
यथैधांसि समिद्धोऽग्निः ४.३७
यदग्रे चानुबंधे च १८.३९
यदहंकारमाश्रित्य १८.५९
यदक्षरं वेदविदो ८.११
यदा ते मोहकलिलम् २.५२
यदादित्यगतं तेजो १५.१२
यदा भूतपृथग्भावम् १३.३०
यदा यदाहि धर्मस्य ४. ७
यदा विनियतं चित्तम् ६.१८
यदा सत्त्वे प्रवृद्धे तु १४.१४
यदा संहरते चायम् २.५८
यदा हि नेंद्रियार्थेषु ६. ४
यदि मामप्रतीकारम् १.४६
यदि ह्यहं न वर्तेय ३.२३
यदृच्छया चोपपन्नम् २.३२
यदृच्छालाभसंतुष्टो ४.२२
यद्यदाचरति श्रेष्ठः ३.२१
यद्यद्विभूतिमत्सत्त्वम् १०.४१
यद्यप्येते न पश्यन्ति १.३८
यया तु धर्मकामार्थान् १८.३४
यया धर्ममधर्मं च १८.३१
यया स्वप्नं भयं शोकम् १८.३५
यस्त्विंद्रियाणि मनसा ३. ७
यस्मात्क्षरमतीतोऽहम् १५.१८
यस्मान्नोद्विजते लोको १२.१५
यस्य नाहंकृतो भावो १८.१७
यस्य सर्वे समारंभाः ४.१९
यं यं वापि स्मरन्भावम् ८. ६
यं लब्ध्वा चापरं लाभम् ६.२२
यं संन्यासमिति प्राहुः ६. २
यं हि न व्यथयन्त्येते २.१५
यः शास्त्रविधिमुत्सृज्य १६.२३
यः सर्वत्रानभिस्नेहः २.५७
यातयामं गतरसम् १७.१०
या निशा सर्वभूतानाम् २.६९
यांति देवव्रता देवान् ९.२५
यामिमां पुष्पितां वाचम् २.४२
यावत्संजायते किंचित् १३.२६
यावदेतान्निरीक्षेऽहम् १.२२
यावानर्थ उदपाने २.४६
युक्तः कर्मफलं त्यक्त्वा ५.१२
युक्ताहारविहारस्य ६.१७
युञ्जन्नेवं सदाऽऽत्मानम् ६.१५

युंजन्नेवं सदात्मानं ६.२८
युधामन्युश्च विक्रान्तः १. ६
ये चैव सात्त्विका भावाः ७.१२
ये तु धर्म्यामृतमिदम् १२.२०
ये तु सर्वाणि कर्माणि १२. ६
ये त्वक्षरमनिर्देश्यम् १२. ३
ये त्वेतदभ्यसूयन्तो ३.३२
येऽप्यन्यदेवताभक्ताः ९.२३
ये मे मतमिदं नित्यम् ३.३१
ये यथा मां प्रपद्यन्ते ४.११
ये शास्त्रविधिमुत्सृज्य १७. १
येषामर्थे कांक्षितं नो १.३३
येषां त्वन्तगतं पापं ७.२८
ये हि संस्पर्शजा भोगाः ५.२२
योगयुक्तो विशुद्धात्मा ५. ७
योगसंन्यस्तकर्माणम् ४.४१
योगस्थः कुरु कर्माणि २.४८
योगिनामपि सर्वेषाम् ६.४७
योगी युञ्जीत सततम् ६.१०
योत्स्यमानानवेक्षेऽहम् १.२३
यो न हृष्यति न द्वेष्टि १२.१७
योऽन्तःसुखोऽन्तराराम ५.२४
यो मामजमनादिं च १०. ३
यो मामेवमसंमूढो १५.१९
यो मां पश्यति सर्वत्र ६.३०
यो यो यां यां तनुं भक्तः ७.२१
योऽयं योगस्त्वया प्रोक्तः ६.३३

र.

रजस्तमश्चाभिभूय १४.१०
रजसि प्रलयं गत्वा १४.१५
रजो रागात्मकं विद्धि १४. ७
रसोऽहमप्सु कौन्तेय ७. ८
रागद्वेषवियुक्तैस्तु २.६४
रागी कर्मफलप्रेप्सुः १८.२७
राजन्संस्मृत्य १८.७६
राजविद्या राजगुह्यम् ९. २
रुद्राणां शंकरश्चास्मि १०.२३
रुद्रादित्या वसवो ये च ११.२२
रूपं महत्ते बहुवक्त्र० ११.२३

ल.

लभन्ते ब्रह्म निर्वाणम् ५.२५
लेलिह्यसे ग्रसमानः ११.३०
लोकेऽस्मिन्द्विविधा ३. ३
लोभः प्रवृत्तिरारंभः १४.१२

व.

वक्तुमर्हस्यशेषेण १०.१६
वक्त्राणि ते त्वरमाणा ११.२७
वायुर्यमोऽग्निर्वरुणः ११.३९
वासांसि जीर्णानि यथा २.२२
विद्याविनयसंपन्ने ५.१८
विधिहीनमसृष्टान्नम् १७.१३
विविक्तसेवी लघ्वाशी १८.५२
विषया विनिवर्तन्ते २.५९
विषयेंद्रियसंयोगात् १८.३८
विस्तरेणात्मनो योगम् १०.१८
विहाय कामान्यः २.७१
वीतरागभयक्रोधाः ४.१०
वृष्णीनां वासुदेवोऽस्मि १०.३७

वेदानां सामवेदोऽस्मि १०.२२
वेदाविनाशिनं नित्यम् २.२१
वेदाहं समतीतानि ७.२६
वेदेषु यज्ञेषु तपःसु ८.२८
व्यवसायात्मिका बुद्धिः २.४१
व्यामिश्रेणेव वाक्येन ३. २
व्यासप्रसादाच्छ्रुतवान् १८.७५

श.

शक्नोतीहैव यः सोढुम् ५.२३
शनैः शनैरुपरमेत् ६.२५
शमो दमस्तपः शौचम् १८.४२
शरीरं यदवाप्नोति १५. ८
शरीरवाङ्मनोभिर्यत् १८.१५
शुक्लकृष्णे गती ह्येते ८.२६
शुचौ देशे प्रतिष्ठाप्य ६.११
शुभाशुभफलैरेवम् ९.२८
शौर्यं तेजो धृतिर्दाक्ष्यम् १८.४३
श्रद्धया परया तप्तम् १७.१०
श्रद्धावाननसूयश्च १८.७१
श्रद्धावाँल्लभते ज्ञानम् ४.३९
श्रुतिविप्रतिपन्ना ते २.५३
श्रेयान् द्रव्यमयाद्यज्ञात् ४.३३
श्रेयान् स्वधर्मो विगुणः ३.३५
,, ,, ,, १८.४७
श्रेयो हि ज्ञानमभ्या० १२.१२
श्रोत्रादीनीन्द्रियाण्यन्ये ४.२६
श्रोत्रं चक्षुः स्पर्शनं च १५. ९
श्वशुरान्सुहृदश्चैव १.२७

स.

स एवायं मया तेऽद्य ४. ३
सक्ताः कर्मण्यविद्वांसः ३.३५
सखेति मत्वा प्रसभम् ११.४१
स घोषो धार्तराष्ट्राणाम् १.१९
सततं कीर्तयन्तो माम् ९.१४
स तया श्रद्धया युक्तः ७.२२
सत्कारमानपूजार्थम् १७.१८
सत्त्वं रजस्तम इति १४. ५
सत्त्वं सुखे संजयति १४. ९
सत्त्वात्संजायते ज्ञानम् १४.१७
सत्त्वानुरूपा सर्वस्य १७. ३
सदृशं चेष्टते स्वस्याः ३.३३
सद्भावे साधुभावे च १७.२६
समदुःखसुखः स्वस्थः १४.२४
समं कायशिरोग्रीवम् ६.१३
समं पश्यन्हि सर्वत्र १३.२८
समं सर्वेषु भूतेषु १३.२७
समः शत्रौ च मित्रे च १२.१८
समोऽहं सर्वभूतेषु ९.२९
सर्गाणामादिरन्तश्च १०.३२
सर्वकर्माणि मनसा ५.१३
सर्वकर्माण्यपि सदा १८.५६
सर्वगुह्यतमं भूयः १८.६४
सर्वतःपाणिपादं तत् १३.१३
सर्वद्वाराणि संयम्य ८.१२
सर्वद्वारेषु देहेऽस्मिन् १४.११
सर्वधर्मान्परित्यज्य १८.६६
सर्वभूतस्थमात्मानम् ६.२९

| | | | |
|---|---|---|---|
| सर्वभूतस्थितं यो माम् | ६.३१ | सांख्ययोगौ पृथग्बालाः | ५. ४ |
| सर्वभूतानि कौन्तेय | ९. ७ | सिद्धिं प्राप्तो यथा | १८.५० |
| सर्वभूतेषु येनैकम् | १८.२० | सीदन्ति मम गात्राणि | १.२९ |
| सर्वमेतदृतं मन्ये | १०.१४ | सुखदुःखे समे कृत्वा | २.३८ |
| सर्वयोनिषु कौंतेय | १४. ४ | सुखमात्यन्तिकं यत्तत् | ६.२१ |
| सर्वस्य चाहं हृदि | १५.१५ | सुखं त्विदानीं त्रिविधम् | १८.३६ |
| सर्वाणींद्रियकर्माणि | ४.२७ | सुदुर्दर्शमिदं रूपम् | ११.५२ |
| सर्वेंद्रियगुणाभासम् | १३.१४ | सुहृन्मित्रार्युदासीन० | ६. ९ |
| सहजं कर्म कौंतेय | १८.४८ | स्थाने हृषीकेश तव | ११.३६ |
| सहयज्ञाः प्रजाः सृष्ट्वा | ३.१० | स्थितप्रज्ञस्य का भाषा | २.५४ |
| सहस्रयुगपर्यंतम् | ८.१७ | स्पर्शान्कृत्वा बहिर्बाह्यान् | ५.२७ |
| संकरो नरकायैव | १.४२ | स्वधर्ममपि चावेक्ष्य | २.३१ |
| संकल्पप्रभवान्कामान् | ६.२४ | स्वभावजेन कौंतेय | १८.६० |
| संतुष्टः सततं योगी | १२.१४ | स्वयमेवात्मनात्मानम् | १०.१५ |
| संनियम्येंद्रियग्रामम् | १२. ४ | स्वे स्वे कर्मण्यभिरतः | १८.४५ |
| संन्यासस्तु महाबाहो | ५. ६ | ह. | |
| संन्यासस्य महाबाहो | १८. १ | हतो वा प्राप्स्यसि | २.३७ |
| संन्यासः कर्मयोगश्च | ५. २ | हंत ते कथयिष्यामि | १०.१९ |
| साधिभूताधिदैवं माम् | ७.३० | हृषीकेशं तदा वाक्यम् | १.२१ |

| | रु. आ. |
|---|---|
| योगवासिष्ठं वासिष्ठमहारामायणतात्पर्यप्रकाशव्याख्यायुतम् | १०— ० |
| वाल्मीकिरामायणम् | ३— ० |
| वेदान्तसारः | १— ० |
| साहित्यदर्पणम् | ३— ० |
| सुभाषितरत्नभांडागारम् | ३— ८ |
| स्तोत्ररत्नाकरः १८० स्तोत्राणि | ०—१० |
| स्तोत्रसंग्रहः ४०० स्तोत्राणि | १— ० |
| स्वप्नवासवदत्तं भासकविप्रणीतं नाटकम् | ०— ४ |
| शाकुंतलं कालिदासस्य with English Translation and Notes by Prof. P. N. Patankar M. A. | २— ० |
| शिवगीता बालानंदिनीव्याख्यायुता | ०— ८ |

